श्रीपरिमळग्रन्थ
प्रकाशनमालाङ्कः १०



साहित्य
विभागाङ्क : ३.

# श्रीमद्राघवेन्द्रविजयः

विद्वत्कुलावतंसैः महाकविभिः
श्रीमन्नारायणार्यैर्विरचितः

विद्यावैभव, वेदान्तशिरोमणि, कवितिलकेत्यादि बिरुद्भाग्भिः
राजा. श्री. गुरुराजाचार्यैः
संस्कृतश्च

प्रकाशकाः
श्री परिमळग्रन्थ प्रकाशनमन्दिरम्
नञ्जनगूडु
१९५८

PRICE 1–0–0 ]   [ POSTAGE EXTRA]

॥ श्री ॥

॥ श्रीमन्मूलरामो विजयते ॥

॥ श्रीगुरुराजो विजयते ॥

श्रीमदानन्दतीर्थीय सच्छास्त्रामृतवर्षकः ।
श्रीमत्परिमळोनाम भाति प्रकटनालयः ॥

श्रीमत्परिमळग्रन्थप्रकाशनमन्दिरत काव्यालङ्कारविभागे इतः पूर्वं वे॥ राजा. एस्. गुरुराजाचार्यैः वेदान्तशिरोमणि कवितिलकेत्यादि बिरुद-बृन्द भूषितैः कृता 'कमलेश कीर्तन मञ्जरी' प्रकाशिता । तदनु श्रीमद्राघवेन्द्रगुरुसार्वभौमै र्विरचिता तेषां पूर्वाश्रम तनूभवैः कविकुलललामभूतैः श्रीलक्ष्मीनारायणाचार्यै र्विरचितापूर्वव्याख्यायुता 'श्रीरामचारित्रमञ्जरी' प्राकाशि ।

इदानीं श्रीगुरुसार्वभौमानामाबाल्यादाश्रमानन्तरं दैनन्दिन पूजाद्यनुष्ठानाद्यसाधारण चारित्र्यवर्णनपरं तेषां पूर्वाश्रम भागिनेयैः षट्शास्त्र पाथोदि-पारङ्गतैः गुरुसार्वभौम प्रसादायत्त निखिल विद्यावैभवैः श्रीनारायणाचार्यै र्विरचितं 'राघवेन्द्र विजया' भिधं महाकाव्यं प्रकटीकर्तुमुद्यताः । अस्य व्याख्याद्वयं वर्तते । तद्व्याख्याभ्यां सह 'राघवेन्द्रविजयः' अचिरादेव प्रकटी क्रीयते । इदानीं पारायण सौकर्याय मूलमात्रं प्रकटी कृतम् । अस्य पारायणेन श्रीगुरुराजप्रसादभागिनो यदि भवेयु र्वाचकाः तदा सार्थकमिदं मन्यामहे । एव मेव ग्रन्थप्रकाशने सर्वानुकूल्यं संपादयन्त्विति श्रीगुरुसार्वभौमानभ्यर्थयामहे ॥

विलंब सं॥ निजश्रावण कृष्ण २। भानुवासरः

इति विद्वज्जन वशंवदाः

महासदनम्

प्रकाशकाः

नञ्जनगूडु.

श्रीपरिमळग्रन्थप्रकाशनमन्दिरम्

31—8—1958

॥ श्रीः ॥

॥ श्रीमन्मूलरामो विजयते ॥

॥ श्रीगुरुराजो विजयते ॥

# श्रीमद्राघवेन्द्रविजयः

विद्वत्कुलावतंसैः महाकविभिः

श्रीमन्नारायणार्यैर्विरचितः

---

## अथ प्रथमः सर्गः

॥ श्रीगुरुभ्यो नमः हरिः ॐ ॥

श्रीमल्लक्ष्मीनृसिंहस्य श्रियं दिशतु मे नखः ।
स्वभक्ताभीष्टदानाय समुपात्तदशाकृतेः ॥ १ ॥

वस्तु स्तुतं सुरस्तोमैरस्तु शस्तं मया स्तुतम् ।
मस्तुहस्तं प्रस्तुताय श्रुतिमस्तकविश्रुतम् ॥ २ ॥

श्रीमदानन्दतीर्थेन्दुभासनं मम मानसे ।
आशासे साधुशब्दार्थसरिदीशाभिवृद्धये ॥ ३ ॥

श्रीराघवेन्द्ररत्नानां रसनारङ्गनर्तकी ।
शब्दाम्बुधिशरज्ज्योत्स्ना शरणं मम शारदा ॥ ४ ॥

कठिनापि कविश्लाघ्या त्रिविक्रमसरस्वती ।
सुवर्णयोगसंदृश्या वरा वज्रमणिर्यथा ॥ ५ ॥

वाणी पाणितलासक्तवीणारवविडम्बिनी ।
नानाप्रबन्धचतुरा भाति नारायणार्यगीः ॥ ६ ॥

वृन्दारवनमन्दारमकरन्दसहोदरी ।
विश्रुता विजयं दद्याद्व्यासतीर्थार्यभारती ॥ ७ ॥

व्याससूत्रपदार्थोपन्यासमाकर्ण्य मान्यपि ।
व्यासराजस्य भजते दासतां को न कोविदः ॥ ८ ॥

चतुःषष्टिकलाविद्याजुषे विद्वन्महोजुषे ।
जयीन्द्रज्योतिषे कुर्यां वन्दनानि यशोमुषे ॥ ९ ॥

सुधीन्द्रयोगिनं सेवे साधुसत्कृतसंपदम् ।
स गद्यपद्यनिर्माणविद्यायाः प्रथमं पदम् ॥ १० ॥

श्रीमतो राघवेन्द्रस्य नमामि पदपङ्कजे ।
कामिताशेषकल्याणकलनाकल्पपादपौ ॥ ११ ॥

मुहुः स्मारितवाल्मीकिं पुनस्तं नौमि दैशिकम् ।
यो विस्तीर्णां रामकथां स्रग्धराभिः समग्रहीत् ॥ १२ ॥

मूकोऽपि यत्प्रसादेन मुकुन्दशयनायते ।
राजराजायते रिक्तो राघवेन्द्रं तमाश्रये ॥ १३ ॥

प्रसाद्य नरपञ्चास्यं प्राप्तं वैदुष्यमद्भुतम् ।
येन लक्ष्मीनृसिंहेन तातपादं तमाश्रये ॥ १४ ॥

प्राप्तान्यनुतिपापौघरसनां पावयाम्यहम् ।
गुर्वन्तर्यामिभगवत्स्तुतिगङ्गाम्बुमज्जनात् ॥ १५ ॥

कलये कवनं किञ्चित्कवीनां सहवासतः ।
पाटीरगिरिसान्निध्यान्निम्बद्रुरिव सौरभम् ॥ १६ ॥

दृष्टं गुरुप्रसदनमदृष्टं च फलं कृतेः ।
यथा स्विष्टकृतो ब्रह्मसूत्राद्यप्रणवस्य च ॥ १७ ॥

श्रेयांसि श्रयते को वा प्रसादेन विना गुरोः ।
कैवल्यमिव गोविन्दकारुण्येन विना जनः ॥ १८ ॥

कविताफलमन्यत्किं गुरूणां गुणवर्णनात् ।
अपवर्गं विनान्यत्किं ब्रह्मजिज्ञासने फलम् ॥ १९ ॥

गुरुपादरजस्सङ्गाद्विमलं कवनं मम ।
कलुषं वारि कतकरजसा किं न निर्मलम् ॥ २० ॥

रमणीयापि कविता न हृद्या यद्यसत्परा ।
निसर्गमधुरा दुष्टजिह्वासक्तेव शर्करा ॥ २१ ॥

अभव्यमपि मे काव्यं सेव्यं गुरुगुणाश्रयम् ।
घनाघनगतं वारि यथा लवणवारिधेः ॥ २२ ॥

अदोषाप्यगुणेत्युक्तिस्त्यक्तुं युक्ता न मे बुधैः ।
पतिव्रतागुणेत्येव पत्या किं त्यजते प्रिया ॥ २३ ॥

अदोषं गुणवद्दृश्यं सर्वैः सर्वार्थदायकम् ।
परं ब्रह्मेव यत्काव्यं श्रुत्युक्तं तत्तु दुर्लभम् ॥ २४ ॥

काव्ये गवेषते कश्चिद्दोषमेव गुणं परः ।
पिचुमन्दं यथा काकः पिकश्चूतलतां यथा ॥ २५ ॥

अस्मद्गुरूणामाधिक्यं कविः को वाऽनुवर्णयेत् ।
तथापि तत्प्रसादेन भक्त्या किंचिद्वदाम्यहम् ॥ २६ ॥

देवानामिव देवेन्द्रो यो दत्त इव योगिनाम् ।
दुग्धाब्धिरिव सिन्धूनां गुरूणामिव पूर्णधीः ॥ २७ ॥

तिग्मांशुरिव तेजस्वी शीतांशुरिव शीतलः ।
यः सिन्धुरिव गम्भीरो धराधर इव स्थिरः ॥ २८ ॥

शारदाया दयामेव शास्त्राणां परिशीलने ।
विविधग्रन्थकरणे यः सहायं समाश्रितः ॥ २९ ॥

वेदव्रजावनोद्युक्तं विद्यादेवी विलोक्य यम् ।
व्यस्मरद्बहुरूपेण तपस्यन्तं समीरणम् ॥ ३० ॥

कलिकालकलाल्लनमूलजालकला लता ।
यद्वागमृतसेकेन पुनस्संजातपल्लवा ॥ ३१ ॥

ललाटरेखादम्भेन बिरुदाक्षरशालिनः ।
जयस्तम्भायिता यस्य प्रतिधीराः पराजिताः ॥ ३२ ॥

श्रोतॄणां श्रवणान्यासन् यद्वागमृतसेवया ।
नित्यापि तदयोग्यत्वान्न तथाहीन्द्रियान्तरम् ॥ ३३ ॥

प्रतीपविद्वत्पाथोधिमथनोत्सवचुञ्चुना ।
वादमन्दरशैलेन येनावापि यशोमृतम् ॥ ३४ ॥

हिरण्यगर्भमूर्तिस्थपुरुषस्येव यद्यशः ।
ततो बहिः प्रसृमरं राजते रौप्यसंपुटम् ॥ ३५ ॥

गुरुराद्यः स्वसिद्धान्तप्रतिष्ठापनपण्डितम् ।
श्रुत्वा यं व्याससनिकटे निश्चिन्त इव वर्तते ॥ ३६ ॥

गोपायति दृढं यस्मिन्नवनीदेवताकुलम् ।
शयानः शेषशय्यायां निद्रातीव हरिश्चिरम् ॥ ३७ ॥

पदेपदे प्रपन्नानां संपदः स्मृतिसंभवाः ।
परीभावप्रदे यस्मिन् शैले शेते नु शंकरः ॥ ३८ ॥

व्याख्यां प्रख्याप्य विख्यातौ संख्यावत्सु यदीरिताम् ।
सुरलोके सुरगुरुः पाताले फणिनां पतिः ॥ ३९ ॥

चित्ते चेन्मृदुता शिरीषसदृशे हैय्यंगवीनं शिला-
गाम्भीर्ये यदि यस्य सोन्घुरुदधीः शास्त्रेषु चेत्पाण्डिती ।
आचार्यो विबुधेशितुः कलयते विद्यार्थितामादरा-
दौदार्ये यदि कल्पपादपमुखाः सभावयन्तेऽर्थिताम् ॥ ४० ॥

तस्मान्महामहिम्नेऽस्मै मनः स्पृहयते मम ।
तद्गौरवेण मत्काव्यमङ्गीकुर्वन्तु सज्जनाः ॥ ४१ ॥

श्रीमत्कश्यपवंशवार्धिशशिनः षड्दर्शनीवल्लभ-
श्रीलक्ष्मीनरसिंहवित्तविदुषः श्रीवेङ्कटाम्बामणौ ।
जातेनार्यदयासुधामयगिरा नारायणेनोदिते
काव्ये चारुणि राघवेन्द्रविजये सर्गो जयत्यादिमः ॥ ४२ ॥

इति प्रथमसर्गः

## अथ द्वितीयः सर्गः

रामावतारस्य हरेरधत्त सेवां हनूमद्वपुषा समीरः ।
भीमात्मना यादवभूषणस्य मध्वात्मना व्यासमुनित्वभाजः ॥ १ ॥

आभाष्य भाष्यं निगमान्तसूत्रव्याख्यात्मकं पूर्णमतिर्गुरुर्नः ।
संपादयध्वं मतसंप्रदायसमृद्धिमित्यादिदिशेयमीश्वरान् ॥ २ ॥

भाष्यामृतोत्पादकरोऽनुभाष्यश्रीमान्स भाष्यान्तरकल्पशाखी ।
व्यासं गुरुं संश्रयते बदर्यामानन्दतीर्थाभिधदुग्धसिन्धुः ॥ ३ ॥

सिद्धान्तसंरोहविधौ नियुक्तेष्वेतेष्वनेकव्रतिषु प्रधानः ।
प्रेमास्पदं स्वीयगुरोः स पद्मनाभार्यवर्योऽकृत दर्शनर्द्धिम् ॥ ४ ॥

सत्तर्कदीपावलिमत्युदारां सन्न्यायरत्नावलिमप्यनिन्द्याम् ।
भाष्यानुभाष्याशयबोधहेतू ततान यस्तार्किकमौलिरत्नम् ॥ ५ ॥

व्याख्यासु यः पाणिनिसूत्रभाष्यव्याख्यादशां व्यञ्जयति स्म साक्षात् ।
छन्नो यवन्या प्रतिपादनेन सहस्रधा सूत्रपदाशयानाम् ॥ ६ ॥

गुरोर्नियोगादधिगम्य राज्यं शिष्यस्तदीयो नृहरिव्रतीन्द्रः ।
गजेशकोशस्थितराममूर्तिं पूर्णप्रबोधाय समार्पयत्ताम् ॥ ७ ॥

सा यत्र रामप्रतिमास्ति तत्र चतुःपुमर्थी सततं चकास्ति ।
आदिश्य चैवं गुरुणैव दत्तामानर्चयस्तामनिशं यमीन्द्रः ॥ ८ ॥

अन्ते वसंस्तस्य गुरोरनेनासभाजयत्तां प्रतिमां वितीर्णाम् ।
संवर्धयन्नादिमसंप्रदायमन्योऽभवन्माधवसंयमीन्द्रः ॥ ९ ॥

मुनेरमुष्मादनवद्यबोधात्कृतोपदेशः प्रतिमां च गृह्णन् ।
क्षोभं विधातुं प्रतिवादिवाचमक्षोभ्यनामा मुनिराविरासीत् ॥ १० ॥

दृढासिना तत्त्वमसीतिवाचा सामर्थ्यभाजा परजीवभेदे ।
अवैदिकाग्र्यं मुनिरेष विद्यारण्यं शरण्यं कुदृशां बिभेद ॥ ११ ॥

तल्लब्धबोधो विमतैकबाधो जयैकभूमिर्जयतीर्थनामा ।
व्याचष्ट पूर्णप्रमतिप्रणीतं सर्वं प्रबन्धं सरसैर्वचोभिः ॥ १२ ॥

असौ कदाचिद्गृहिभावकाले विधाय धाटीं तुरगाधिरूढः ।
अक्षोभ्यतीर्थाश्रिततीरसीमामक्षोभ्यतीर्थां तटिनीमयासीत् ॥ १३ ॥

अनुद्धृतं वारि समुद्धतश्रीः पीत्वा मुखेनैव तृषाकुलेन ।
मुनिं समीपे मननैकतानमसावनंसीदवलोक्य मूर्ध्ना ॥ १४ ॥

अभ्यर्थितस्तेन मुनिः सभक्त्या संन्यासमन्याद्दृशवारिपानात् ।
अमंस्त तं पूर्णमतिप्रदिष्टं व्याख्यातृभावे वृषमन्यभावे ॥ १५ ॥

विधाय तं संयमिनं प्रहृष्टे गुरौ तदीयारुषिताः पुनस्तम् ।
निन्युः पुरीं तत्र भयेन भार्याजनेन दृष्टः स तु शेषवेषः ॥ १६ ॥

ततोऽतिविश्वासयुजा नगर्याः पित्रादिना बन्धुजनेन तूर्णम् ।
आनीय तस्मै मुनये स दत्तः शास्त्राण्यमुष्मादखिलानि लेभे ॥ १७ ॥

तस्मादुपेता प्रतिमा हरेः सा क्रमेण सिद्धान्तसमृद्धिहेतुः ।
विद्याधिराजव्रतिनं कवीन्द्रं वागीशमस्मादपि रामचन्द्रम् ॥ १८ ॥

अन्ते वसंस्तस्य नृसिंहदेवोपान्ते वसंस्तत्कृपया प्रतीतः ।
विजित्य सर्वान्विबुधेन्द्रयोगी बभौ हरेरर्पितजैत्रपत्रः ॥ १९ ॥

जितारिरस्माद्रघुनन्दनोतस्ततः सुरेन्द्रव्रतिनो बभूवुः ।
पवित्रिताभूदखिला धरित्री चिरं गृहीतानशनव्रतैस्तैः ॥ २० ॥

विद्वद्वरोस्माद्विजयीन्द्रयोगी विद्यासु हृद्यास्वतुलप्रभावः ।
रत्नाभिषेकं किल रामराजात् प्राप्याऽनलक्ष्मीनकृताग्रहारान् ॥ २१ ॥

वाक्ये पदे पादविलोचनोक्तौ व्यासीयशास्त्रे च कृतान्प्रबन्धान् ।
आस्तां बुधः श्रोतुमशेषमेषामाख्याः समाख्याद्यदि पण्डितोऽसौ॥२२॥

सा रामचन्द्रप्रतिमा जयीन्द्रात्सुधीन्द्रयोगीन्द्रमगात्क्रमेण ।
विस्तीर्णकीर्तिर्विभावावन्यां विख्यातविद्वज्जनवन्द्यपादः ॥ २३ ॥

पवित्रितामेष धरां वितन्वन् सञ्चारतो दिग्विजयापदेशात् ।
श्रीवेङ्कटक्ष्मापरिणीसमक्षे वादेन विद्वेषिबुधान् विजिग्ये ॥ २४ ॥

समेत्य शङ्खादिमजैत्रचिह्नं नृपादमुष्मादपि सह्यजायाः ।
तटस्थितां तापससेवितां तां पुरीं प्रपेदे पुनरुक्तनाकाम् ॥ २५ ॥

सदा परीता परिणाहवारिप्रवाहरीत्या भुवि सह्यपुत्र्याः ।
पराजिताखण्डलपत्तनश्रीर्या कुम्भघोणाभिधया समिन्धे ॥ २६ ॥

पातालपर्यन्तनिविष्टमूलां वैरिञ्चगेहव्यतिलङ्घि मौलिम् ।
पीताम्बरां हाटकहारिशोभां मन्ये स लक्ष्मीं परदेवतां याम् ॥ २७ ॥

अध्यासिता राजतसालमध्ये आसारसौधच्छलमाधवेन ।
खेयाम्बुधौ क्षीरमये निविष्टश्वेतादिमद्वीपमयी रमा या ॥ २८ ॥

स्वयंभुवा या ससृजे पुरस्ताद्ब्रह्माण्डसृष्टेः परिशीलनाय ।
नो चेदमुष्याः कथमीदृशी स्याद्विशालता विश्वनिवासयोग्या ॥ २९ ॥

यत्खेयखेलद्द्विपदानवारिगन्धे तदम्भोरुहसौरभे च ।
लोभाद्भ्रमन् कंचन नाप भृङ्गो नैवातिवाञ्छस्य निजेष्टलाभः ॥३०॥

दत्तो महादानकृता विधात्रा सरोजसद्माण्डकटाह एव ।
या स्वर्गसत्याञ्चितलोकयुक्ता नो चेत्स तद्वान्विधिरस्तु केन ॥ ३१ ॥

न केवलं यद्वलभीविहङ्गाः प्रांशुस्थिता नन्दननीडभाजः ।
गीर्वाणवाण्या विहगान्विवादैर्विजिग्यिरे हन्त विचित्रवाग्भिः॥ ३२ ॥

वर्धिष्णुसौधाग्रविभिन्नपद्मजन्माण्डनिर्यद्बहिरम्बुपूरम् ।
वदन्ति गङ्गां परता कथं वा स्याद्वामनाङ्घ्रेर्द्रुहिणाण्डभेदः ॥ ३३ ॥

मध्यंदिने यौवतनर्मकीर्णकस्तूरिकापङ्किलसौधशृङ्गे ।
रथं नु मग्नं परिकृष्य यस्यां श्रान्तोर्कवाजी समया करोति ॥ ३४ ॥

अगाधपाथःपरिखां यदीयामम्भोनिधिः स्वेन समीचकार ।
गाम्भीर्यगर्वेण जडाश्रयत्वादेनं रुषागस्त्यमुनिः पपौ किम् ॥ ३५ ॥

पद्मात्मभूब्रह्महिरण्यगर्भस्रष्टृत्वहंसाश्रयवाक्प्रियत्वैः ।
चतुर्मुखत्वेन च धातृभावाच्चकास्ति यस्याश्चतुराननत्वम् ॥ ३६ ॥

दम्भोलिपाणिर्धरणीधरेन्द्रदम्भादयासीदधिभूमि यस्याम् ।
अम्भोमुचस्तस्य वियोगभीतास्तम्बेरमेन्द्राः परितश्चरन्ति ॥ ३७ ॥

खेये यदीये कलशाम्बुराशौ वैशाखशैलान्मणिजालसालैः ।
उदारधेनुद्युमणीन्दिराभिर्योगादपां तद्बहुधेति मन्ये ॥ ३८ ॥

भुञ्जानकञ्जाननसौधसद्ममध्यं समागादिति सूरसूतः ।
यदीयदौवारिकदारितोरुस्तेनासृजाद्याप्यरुणो ह्यनूरुः ॥ ३९ ॥

स्वीयावनैश्वर्यकलान्यशिक्षाकृते रमेशांशनृपेण यस्याम् ।
मुक्तारुणेन्द्रोपलसौधदम्भाद्गुणत्रयं किं क्रमशो गृहीतम् ॥ ४० ॥

रत्नप्रभाबन्धुरजालजालरश्शृङ्गैरनेकैरनुयाति सौधः ।
नीलाकृतिः स्वात्मनि लक्ष्यलोकः श्रीमान्यदीयः पुरुषस्य रूपम् ॥ ४१ ॥

कानीनजाताः श्रुतयश्चतस्रो विभिद्य सालं व्यतिलङ्घिताभ्रम् ।
द्वारैरवापुर्विदुषो यदीयानद्यापि तान्येव तु गोपुराणि ॥ ४२ ॥

वृत्तं यदीयं चरणैश्चतुर्भिर्द्विरैरुपेतं चतुरस्रसालम् ।
श्रीचक्रबिन्दुं सततं श्रितस्य महीगृहं मन्त्रविदो वदन्ति ॥ ४३ ॥

गजैर्गिरीन्द्रैर्जवतो विहङ्गैस्तुङ्गैस्तुरङ्गैर्मिलितं तरङ्गैः ।
चतुःप्रतोलीचतुरास्यसिन्धुं चतुष्पथं सङ्गगदुर्यदीयम् ॥ ४४ ॥

विचित्रयत्पण्यगृहाणि कर्त्रा विस्मृत्य धात्रानुकृतं जनानाम् ।
समार्पयत्सद्मनिबोधनार्थं शृङ्गाटकं ज्ञापकहंसपादम् ॥ ४५ ॥

पाकाहिते यन्नृपवैभवेन पराजिते हन्त विसृज्य सिन्धुम् ।
बृहत्कुचा यत्प्रमदाजनानां चरन्ति यस्यां गिरयो निकामम् ॥ ४६ ॥

विभाकरेऽस्तेपि विकासभाजां निरन्तरं संस्तुतहंसकानाम् ।
घनागमेप्यभ्युदयं गतानां पङ्केरुहैर्यत्प्रमदापदानाम् ॥ ४७ ॥

न चन्द्ररेखा नखरेण क्लृप्ता न मोहनं केवलदर्शनेन ।
न श्लक्ष्णता नैव रुचिर्न हारास्तैरद्रिभिर्यद्रमणीकुचानाम् ॥ ४८ ॥

न बन्धकत्वं शकुलेषु दृष्टं न चोत्पले चञ्चलताम्बुजेषु ।
स्वतो तनोर्बाधकतानबाणे यदङ्गनानां नयनैरमीषाम् ॥ ४९ ॥

न वक्रिमा बर्हिणबर्हिबर्हे न तैजसैकासिकतान्धकारे ।
न मेघवृन्दे चिरकालनैल्यं यदङ्गनाकेशभरैरतस्तैः ॥ ५० ॥

न भ्रूविलासा नतमां स्थिरश्रीर्नानारसोक्तिर्नतमां च यस्य ।
तेनेन्दुना यत्प्रमदामुखानां कथं कवीन्द्राः कथयन्तिसाम्यम् ॥ ५१ ॥

तस्यां नगर्यां सुकृते बदर्यां भवाब्धितर्यांम्बुधसिंहदर्याम् ।
विचित्रनार्यां विजितेन्द्रपुर्यां चिरं न्यवात्सीत्सितसौधगौर्याम् ॥ ५२ ॥

अतुलविविधविद्वन्मण्डलीलाल्यमानः
प्रभुमणिरघुनाथप्रौढभूपालकेन ।
निहितनिखिलविद्वन्मौलिपादः सुधीन्द्रः
परजनदुरवापं प्राप हेमाभिषेकम् ॥ ५३ ॥

श्रीमत्काश्यपवंशवार्धिशशिनः षड्दर्शनीवल्लभ
श्रीलक्ष्मीनरसिंहवित्तविदुषः श्रीवेङ्कटाम्बामणौ ।
जातेनार्यदयासुधामयगिरा नारायणेनोदिते
काव्ये चारुणि राघवेन्द्रविजये सर्गो द्वितीयोऽभवत् ॥ ५४ ॥

इति द्वितीयस्सर्गः

———

## अथ तृतीयः सर्गः

अवनं सवनादिसत्क्रियाणामवनीदानववैरिणां निदानम् ।
भवति स्म मुनीशितागुणानामवलम्बो भुवि गौतमाभिदानः ॥ १ ॥

प्रकृतिः परदेवताप्रपत्तिप्रभृतीनां करणेन सद्गुणानाम् ।
प्रथितव्रततापसव्रजानां विकृतीनां सगुणेव निर्गुणेष्ट्याः ॥ २ ॥

अकृतासुरसार्थमोहनार्थं नयशास्त्रं स तु पञ्चलक्षणात्मा ।
मुहुरागमभेदकृन्मुनीन्दोरवतारस्य निमित्ततामयासीत् ॥ ३ ॥

अधरीकृतलेखपाललोके बहुमुक्ताफलभाजि साधुवृत्ते ।
अभवन्नविभाविताग्रभागे मुनिवंशे वसुधासुधाशनेशाः ॥ ४ ॥

जनकोपमकन्यकेन्वयेस्मिन्निजताताधिकनन्दने गुणौघैः ।
अनुजातसमानपूर्वजातेऽभवदेको भुवि कृष्णनामधामा ॥ ५ ॥

स दधार धरोदरे प्रसिद्धा निरवद्या विविधा द्विजातिविद्याः ।
स बभूव च वैणिको यथार्थं निजविद्याधरतां विधातुकामः ॥ ६ ॥

उपदिश्य स कृष्णभूवलारेर्निजगान्धर्वकलां कलामगृह्णात् ।
घनमौक्तिकगुच्छहारपूर्वां बिरुदालीं गुरुदक्षिणापदेशात् ॥ ७ ॥

गुणवारिधिराविरास विद्याचणकृष्णार्यमहीसुराधिनेतुः ।
कनकाचलनामपुण्यनामा कनकोर्वीभृदिवापरोतिधीरः ॥ ८ ॥

उदभूदधिभूतले द्विजेन्द्रादधिभूरागममौलितन्त्रभाजाम् ।
अवदन् किल तिम्मणार्यमार्यास्सुहृदो वेङ्कटशैलनाथनाथम् ॥ ९ ॥

अधिकृत्य स बाल्य एव शास्त्राण्यधिकं वैणिकवर्णगानविद्याम् ।
नगरं विजयाख्यमध्यतिष्ठज्जननीतातसुहृज्जनाधिवासम् ॥ १० ॥

स्मृतिवन्निगमस्य पद्मिनीवद्दिननाथस्य मुनेररुन्धतीव ।
रजनीसुहृदः कुमुद्वतीव महिला तस्य ललास गोपिकाम्बा ॥ ११ ॥

अभजन्नृपतेर्दिनप्रदीपं स तु विश्वक्प्रबलं प्रतापरश्मिम् ।
दिनमण्यनुवर्तितस्य शान्त्यै स्वसमानेतरवाक्तमिस्रराशेः ॥ १२ ॥

ध्रुवमेष दिनप्रदीपमागाद्दयिताकीर्तितमो गुणप्रमायै ।
गुणिनः सकलस्य बाह्यतेजोयुतचक्षुर्विषयत्वमादधानः ॥ १३ ॥

यजनादिमनैजकर्म कुर्वन् द्विजवर्यो नगरे चिरं न्यवात्सीत् ।
रमणीमणिगोपिकाम्बयाऽसौ सहितश्चन्द्रिकया सहेव चन्द्रः ॥ १४ ॥

नगरान्निरगान्नरेन्द्रयोग्यात् सहजायः ससुहृज्जनोऽसुती सः ।
अखिलार्थितदानदक्षशेषाचलभूषामणिदेवतां दिदृक्षुः ॥ १५ ॥

तनुजानतुलानवाप्तुकामौ तपसा तोषयतःस्म दम्पती तौ ।
निजवंशजवन्दनीयदेवं परथापत्यसुखं कथं जनानाम् ॥ १६ ॥

अथ तुण्डिरमण्डलेऽग्रहारे लसिते पट्टणिनाम्नि वासयोग्ये ।
कमलारमणं प्रसाद्य कान्तामिलितः कानपि वत्सराननैषीत् ॥ १७ ॥

सुषुवे सुगुणां सुतां सुवेषां गुणसिन्धुं तनयं च गोपिकाम्बा ।
अचिरेण जनिष्यमाणसूनोरतुलां कीर्तिमिव क्रमात्प्रतापम् ॥ १८ ॥

कुलदैवतदैशिकप्रसादात्प्रभवापत्यपुरस्सरोऽतुलश्रीः ।
स चकार च वेङ्कटांबिकाख्यां स्वसुताया गुरुराजनाम सूनोः ॥ १९ ॥

मिलितौ खलु दर्शपूर्णमासौ फलदौ तद्वदसौ सुतोऽसहायः ।
न सुखाय भवेदितीव सोऽयं प्रभुमन्यं सुतमर्थयांबभूवे ॥ २० ॥

महिदासमिवेतरा महान्तं हरिदिन्दुं च यथेव पौरुहूती ।
उरुशेवधिमुर्वरेव तस्मादुदरेऽधत्त कुमारमुत्पलाक्षी ॥ २१ ॥

शशिनाथकला किमब्धिवेला निजभर्तुः फलिता नु पुण्यरेखा ।
किमु साकृतिरागतस्य कीर्तिर्धृतमूर्तिः किमु कौमुदी किमेषा ॥ २२ ॥

उदरस्थसुतेन्दुचन्द्रिकायां विततायामखिलाङ्गपाण्डुतायाम् ।
सहितौ सुतनोरुरोजचक्राविति चक्रं न तपोनिधिर्यदन्तः ॥ २३ ॥

तनुशायिशिशोर्विरागता किं विततासङ्गेषु विशाललोचनायाः ।
परथा सततं हिते तरुण्या रुचिते वस्तुनि किंतरां विरागः ॥ २४ ॥

न परं सदृशं प्रसन्नताद्यैर्धवलिम्नाऽपि तदाननं सुधांशोः ।
अकलङ्कतयाऽवनौ प्रसिद्धं सकलङ्केन कथं समत्वमेति ॥ २५ ॥

कृशताऽजनि याऽवलग्नदेशे ववृधेऽङ्गे कतिचिद्दिनान्यशेषे ।
वशतां नहि याति मध्यसंस्थाप्युपचारेण विना घनाश्रितात्पा॥ २६ ॥

सभयो विधुरेष सद्मकेयात्स्वमपहुत्य निगूहितुं प्रवृत्तः ।
निजलक्ष्म निरस्य रोमराजिं निभृतोगर्भमुपेयिवानमुष्याः ॥ २७ ॥

कमितुः किमु मोहनाय कामोऽकृत कामं कठिनौ कुचौ तदीयौ ।
निजचूचुकनीलिमाऽपदेशादचिरोपात्ततमोगुणावभूताम् ॥ २८ ॥

ततनाभिनिभालवालमध्यादुदयद्रोमलताऽऽख्य कल्पशाखी ।
फलितोऽजनि किं पयोधराभ्यामुदयच्चूचुकनैल्य भृङ्गभाग्भ्याम् ॥२९ ॥

कुचयोर्युगलं कुलाद्रिसारं कथमेषा तु बभार गर्भकाले ।
इति विस्मयता कुतः कवीनां फलिनीं चिन्तयतां सुरद्रुशाखाम् ॥

तनयाभ्युदयादृणत्रयस्याप्यपनोदं कमितुर्विधातुमस्याः ।
पुरतोऽकृत तस्य लक्ष्मरेखात्रिवलीरब्जभवो निरस्तरूपाः ॥ ३१ ॥

विमतं निखिलं च दृश्यभावाद्भविता सत्यमितीदृशानुमाने ।
अधिमध्यमपास्य हेत्वसिद्धिं प्रथिमा कोऽपि शनैश्शनै र्जजृम्भे ॥

उदरे सुतनोरचाक्षुषत्वं शुभरूपे महति प्रवेशहीनम् ।
विहितं त्रिवलाविवेतदङ्गे पशुयूपे यदरत्निसाप्तदश्यम् ॥ ३३ ॥

उदरस्थशिशोरुदेष्यतोऽस्य वसने लोहितमृत्तिकाऽनुरागः ।
इति तद्घटनाय किं नु शोणां मृदमासेवत सादरं मृगाक्षी ॥ ३४ ॥

द्युनदीं यमुना विजेतुकामा कुरलालिच्छलतो नु कोमलाङ्ग्याः ।
कुचमेरुयुगान्निपत्य रोमावलिदम्भादगमच्च मध्यदेशम् ॥ ३५ ॥

वसुधासुरवासवस्य गर्भे कृतवासस्य नतभ्रुवोर्भकस्य ।
अजनिष्ट मनोरथोनुरूपः क्रमशः प्रासवति द्वितीयमासे ॥ ३६ ॥

भवने भुवनं कृशानुतप्तं परिकृतं नवशातकुम्भकुम्भैः ।
अपहाय नदीपयो हिमानीधवलं केवलमैच्छदच्छबुद्धिः ॥ ३७ ॥

रसनानयनान्तरङ्गरम्यं भवने भोजनसाधनं विसृज्य ।
परकीयगृहादुपाहृतं तद्रुचिरं वारुचि वाप्यभुङ्क्त सैषा ॥ ३८ ॥

विदुषी विविधाः कथा वितेने विहगाधीश्वरवाहनाह्वयाङ्काः ।
वदति स्म वदावदावलीनां बसति स्मासन एव संततं सा ॥ ३९ ॥

पदमेकमलक्तकेन हीनं पदमेषा विदधाति नाङ्गणेषु ।
विविधानि विसृज्यपूर्णसंध्या समरागाणि सदाम्बराणि वष्टि ॥ ४० ॥

स कदाचन शोभनेऽह्नि सूनोर्विदधे पुंसवनच्छलेन भुक्तिम् ।
पटपक्कफलेन गर्भभाजो जनिशिष्टोऽस्त्र भवेदितीव धर्मः ॥ ४१ ॥

असविष्ट सुतं द्विजेन्द्रपत्नी शुभलग्ने परिपूर्णदृष्टिभाजि ।
अखिलद्विजराजवन्दनीयं द्विजराजं दिगिवामराधिपस्य ॥ ४२ ॥

सहितात्मजजन्मवाक्सुधाब्धेस्सरितोऽसौ सलिले ममज्ज विप्रः ।
द्विजवन्द्यमहोदये पितॄणामृणपङ्काम्बुनिधेस्तदोन्ममज्ज ॥ ४३ ॥

भुवनेऽस्य समोऽर्भकस्य दृष्टो न मयेतीव वदन् स्वहेतिहस्तात् ।
परितो वलतस्तुरीयधर्मे हविरादाज्जनकार्पितं हुताशः ॥ ४४ ॥

प्रददौ बहुकर्मधारयेण स्वबहुव्रीहिमुपाददे द्वयाग्र्यान् ।
स तु तत्पुरुषैः पुनर्वितीर्णान्रचितद्वन्द्वफलान् धृताव्ययित्वात् ॥४५॥

अचिरात्कृतमज्जनोऽतिशुभ्रः सहसाऽप्रातरजस्तमोगुणोऽयम् ।
कथमिन्दुसमोऽन्यथेति कान्तानिकरो वर्णयति स्म सूतिकान्तः ॥४६॥

सहजो हि गुणो मदीयमञ्जुद्विजसंसेवनमस्य मे पदस्य ।
इति दर्शयता पदं निजास्ये मणिडोलामधिशायिना कृतं किम् ॥४७॥

उदयास्तपटीरहेमपृथ्वीधरपर्यन्तधराचरैर्जनौघैः ।
अभिवन्द्य इतीव बालकस्य व्यतनोद्वेङ्कटनाथनाम तातः ॥ ४८ ॥

घटते तनयेऽभिधा तदंशे गुणवृद्ध्यर्थमनूक्तिसिद्धये च ।
अतिदेशकृते हरेर्गुणानां विवदन्ते खलु जैमिनीयशौण्डाः ॥ ४९ ॥

अधिसद्मतलं सुतस्य मूर्त्या स्फुटमङ्गीकृतजानुचंक्रमस्य ।
चतुरंघ्रिवृषाकृतेः कदाचित्सुरभेराकृतिरेकदाऽन्वकारि ॥ ५० ॥

तनयस्य नवप्रबालवल्लीलसदङ्गुष्ठविराजिताननाब्जम् ।
हृदयाम्बुजमन्तरात्मगर्भं प्रकटं दर्शयतीव सज्जनानाम् ॥ ५१ ॥

विदधन्नवनौ निसर्गरक्तं प्रतिलीलं मुहुरुत्पतन्यतन्सः ।
लसतिस्म करिष्यमाणलक्ष्मीपतिपादानतिशीलनाय वैषः ॥ ५२ ॥

बहिरङ्गणसीम्नि केलिभाजः तनुलग्ना रजसां रराज राजिः ।
जगदात्मविकारसूक्ष्मरूपप्रकृतिर्विष्णुगतेव दृष्टियोग्या ॥ ५३ ॥

महनीयगुणस्य मासि षष्ठे सुतमन्नाशननामधर्मवन्तम् ।
अतनिष्ट ततस्तृतीयवर्षे चतुरस्यास्य चकार चौलकर्म ॥ ५४ ॥

विलिख्य भूमौ प्रथमं कुमारं रेखामिमामोमिति संपठेति ।
पित्रा नियुक्तः पुनरब्रवीत्तमल्पे कथं सा गुणपूर्णसंज्ञा ॥ ५५ ॥

इति वदन्तमवेक्ष्य सुहृज्जनाः श्रुतिशिरोदृढवासनमानसन्।
कथमयं शिशुरीदृशवाक्पिता सुकुतवानिति विस्मयिनोऽभवन् ॥५६॥

तनूजामष्टाब्दां ससहजयुगां काव्यकुशलां
सुभद्रां भद्राङ्गीमिव मुसलिकंसारिसहिताम् ।
स दद्यां कस्मैचिद्विदितकुलसंजातविदुषे
चकारेत्थं बुद्धिं तनयवदनालोकमुदितः ॥ ५७ ॥

श्रीमत्कश्यपवंशवार्धिशशिनः षड्दर्शनीवल्लभ-
श्रीलक्ष्मीनरसिंहवित्तविदुषः श्रीवेङ्कटाम्बामणौ ।
जातेनार्यदयासुधामयगिरानारायणेनोदिते
काव्ये चारुणि राघवेन्द्रविजये सर्गस्तृतीयोऽभवत् ॥ ५८ ॥

इति तृतीयसर्गः

# अथ चतुर्थस्सर्गः

॥श्री हयग्रीवाय नमः हरिः ॐ॥

अथेन्द्ररक्षोत्सुकवामनोद्भवप्रसिद्धिमत्काश्यपवंशसंभवः ।
भुवि श्रुतो डङ्किपुराधिनायको बभूव तिम्मण्णढणायकाभिधः ॥ १ ॥

तदन्ववाये जनितो द्विजोत्तमो महीतले तिम्मरसार्यनामभाक् ।
उवास नारीसरसीतिविश्रुतां पुरीमुदारो निजतेजसार्जिताम् ॥ २ ॥

अजायतास्मादवनीसुरोत्तमाद्भुवि प्रतीतः फणिशायिसंज्ञया ।
चकार वासं कृतमालिकापगापयःपवित्रे मधुराभिधे पुरे ॥ ३ ॥

अरातिविद्वद्विजयार्थवृद्धिमत्सरस्वतीनित्यनिवासमन्दिरम् ।
अभूदभूतोपमवृद्धिसागरः सुतोऽस्य लक्ष्मीनरसिंहनामभाक् ॥ ४ ॥

कृतोपनीतेः सुकृताकृतेरयं सुतस्य वैवाहिक शोभनोदयम् ।
चिकीर्षुरागात्किल यत्र संस्थितौ सुताविवाहोत्सवकारिदम्पती ॥ ५ ॥

समागतं सद्म सुतोचितं वरं स्वकीयवंशानुगुणान्वयोद्भवत् ।
सुताकरं ग्राहयति स्म मान्यधीरपूजयत्तत्पितरौ सबान्धवौ ॥ ६ ॥

अथोपनीतिं विदधे पिताग्रतः समुद्भवस्यात्मगुणानुकारिणः ।
सुतस्य गर्गः शितिवासनो यथा स्ववैरिधात्रीमथ नाग्रजामनः ॥ ७ ॥

ऋतौ वसन्तेऽनुजमष्टहायनं तमग्रजो मासि मधावुपानयत् ।
निघण्टुनानालिपिलब्धनैपुणं पितुः समानं कलयन्निवात्मनः ॥ ८ ॥

उपास दत्तं कुतुकेन शेमुषीनिधिः स लक्ष्मीनरसिंहदैशिकम् ।
तपोधिसांदीपनिभूसुरोत्तमं यथा यशोदातनयस्त्रयीमयम् ॥ ९ ॥

द्विपञ्चकृत्वश्श्रुतिमात्रतः श्रुते त्रिविष्टपोद्यानवनीमहीरुहः ।
बटुर्द्वितीयां बटुभिर्वयस्समैरधत्त शाखां धरणीसुरेश्वरः　॥ १० ॥

असावगृह्णादपि काव्यमग्रिमं महीसुरोनध्ययने वयस्समैः ।
अचष्टधीमाननिरीक्षितं पुनस्तदेव पृष्टं गुरुणान्यवासरे　॥ ११ ॥

रहोदिवारात्रमसंख्यचिन्तनं सतीर्थ्यसार्थेन कुतूहलात्कृतम् ।
सुजातकर्मातिशयं सुते कृतं चकार पित्रेव महीयसा मतौ ॥ १२ ॥

विहारभेदान्विविधान्विशालधीः सकृद्विलोक्यैव सखिव्रजैः कृतान् ।
तानेव संगृह्य तपोभिशीलनाकृते सदैवातनुते स्म सादरम् ॥ १३ ॥

स वायुवेगात्सरितोप्यवातरत्स्वबाहुना बाण इवातिरंहसा ।
ऋजुव्रजन्वक्रपदार्थपद्धतिं स्वहृद्दजुब्रह्मगतिं नयन्निव　॥ १४ ॥

निरन्तरं सृष्टसमीरणस्वनः प्रधानलीलाः पुलिने सखिव्रजैः ।
जनिष्यमाणाग्र्यजपाङ्गरेचकप्रधानयोगं गुणयन्निवातनोत् ॥ १५ ॥

सरस्वतीमच्चतुरास्यभासुरे स्व भूभवेऽस्मिन्सरतिर्वसाम्यहम् ।
इतीव मारः सततं विराजते सहेत को वा सहजे समुन्नतिम् ॥

महामतिं माणवकं च तद्वचः कृताधिवासं सहशारदं विधिम् ।
विदुः परं ब्रह्म सदागमं ब्रुवद् द्विमत्स्यरूपं नयनद्वयं विभोः ॥१७॥

कपोलराजन्नवरोमवल्लरीनिवेष्टितुं याति तदा तदाननम् ।
समानतां तेन यदा बहिर्गलत्कलङ्करेखावृतमिन्दुमण्डलम् ॥ १८ ॥

गलान्तपीतप्रसवासवैः पुनस्तदीयलोभाच्चलितालिभिर्युतम् ।
शरत्सरोजातमिवास्य भासते मुखं परीतं नवगण्डरोमभिः ॥ १९ ॥

विलम्बिते श्मश्रुमहः परं पराद्वितय यश्शृंखलमध्यसीमनि ।
तदाननच्छद्मसुवर्णभाजने विराजते विस्तृतशास्त्रशेवधिः ॥ २० ॥

करीश्वराणां धरणीसमागमे भवेदुपादानमसंशयं भ्रुवौ ।
अमुष्य नोचेत्परथा कथं क्षिते र्भवेदयं श्यामलिमा मनोहरः ॥ २१ ॥

अमुष्यदेणांकविभावरीशितु र्दलेनं कृत्वाऽस्य ललाटमण्डलम् ।
सरोजभूस्तस्य कलङ्करेखिकां चकार चिल्लालतिकामपि प्रभोः ॥ २२ ॥

नवाकृतेरस्य ललाटतामसी विटार्धबिंबाग्रलसत्सुधारसम् ।
उदग्रनासाश्रममार्गनिर्गमं बिभर्त्ति नोचेदमृतं कुतोधरे ॥ २३ ॥

रजोगुणस्तस्य मनोऽतिनिर्मलं प्रवेष्टुकामोऽप्ययपटुस्तपोबलात् ।
दुराशया हन्त चिरं विवर्तते दृशोयुगल्यामधरेऽतिभासुरे ॥ २४ ॥

मनोहरे तन्मुखगर्भमन्दिरे चिरं रसज्ञानिभतूलिकाञ्चिते ।
वचोऽधिदेव्यां शयनक्रियाजुषो रदावलिं हारलतेति मन्महे ॥ २५ ॥

सरन्ध्रकर्णद्वयमान्ध्रदैशिकाः पयोजकन्यामनुबीजरेखिके ।
सुवेषवेदप्रणवौ तु संजगुः सुमेधसोऽस्या द्रविडावनीसुराः ॥ २६ ॥

अनङ्गकुम्भीशितुरेतदाननप्रभासुधोदन्वति खेलतश्चिरम् ।
सहैव बध्वा सहसा समुद्यतौ कराविवेते लसितेऽसिते भ्रुवौ ॥ २७ ॥

अमुष्य शुद्धं हृदयं पयोविजामनोहरान्तःपुरमेव मन्महे ।
उरःकवाटं स्तनकीलकीलितं प्रयाति यद्रोमलताभशृङ्खलम् ॥ २८ ॥

यदीयनासानिटिलद्युतिच्छलद्युसिन्धुसिन्धुप्रभुसंगमस्थले ।
स्फुरन्महावर्तविभूषितान्तरे विभिन्नवेले इव चिल्लबल्लिके ॥ २९ ॥

तदानने कान्तिपयःपयोनिधौ निमज्जनोन्मज्जनकेलिकारिणा ।
सुमेषुणा नूनमिमौ समुद्यतौ भुजौ भुवा रूपभृतौ व्यराजताम् ॥३०॥

अनन्तकल्याणगुणैकमन्दिरं हरिं जगद्व्याप्ततनुं हृदन्तरे ।
विधातुकामस्य भुजान्तरं क्रमादमुष्य विस्तारमपारमध्यगात् ॥३१॥

मनोरमेशास्पदमस्य मञ्जुलं विहर्तुमम्भोरुहसायकेऽञ्चति ।
उरोव्यलासीत्फलके दरोन्नते भटैस्तदीयैः बहिरर्पिते इव ॥ ३२ ॥

मृणालवल्लीं कथयन्ति कन्धरां मुखारविन्दस्य विकस्वरश्रियः ।
परे तु नालं मृदुलं गलं जगुर्मुखाभिधाभृन्मुकुरस्य मन्दिरम् ॥ ३३ ॥

उपेयुषो जागरदायिनो हरेः हृदम्बुजादक्षि ततो हृदम्बुजम् ।
अमुष्य कण्ठस्थितनैजसात्मनो गृहाणि रेखात्रितयं गलान्तरे ॥ ३४ ॥

अमुष्य लोकत्रयलक्षणक्रियानिबोधनायेह नृणां तनूदरे ।
महामहिम्नोऽस्य वलित्रयच्छलात्कृता विधात्रा किमु चिह्नरेखिका॥३५॥

सदैव दाहो हननं कपीश्वरै रगस्त्यपानं मथनं महीमृता ।
इतीव संत्यज्य समुद्रमादरादमुष्य कम्बुर्गलतामवाप्तवान् ॥ ३६ ॥

करौ कृतौ चेन्नवचूतपल्लवौ कथं सहेते सतताम्बुसङ्गतिम् ।
सदोद्यतस्यास्य सुकर्मदानयोरितीव वेधाः कमले करैर्व्यधात् ॥ ३७ ॥

पदे कृते चेत्कठिने मया पदा व्रजेदयं तन्न सहे नवाकृतेः ।
चिरेण यानेन व्रजेद्वसुन्धरामितीव वेधा मृदुलेऽव्यधादिमे ॥ ३८ ॥

ऋणादृषीणमथ मुक्तभाजनं मुमुक्षुरग्र्यः सुधियामृणद्व्यात् ।
तदग्रजो वीक्ष्य विवाहमङ्गलं विधातुमैच्छद्गुरुराजनामभाक् ॥ ३९ ॥

तदाग्रहारे महनीयवैभवे निजाग्रहारस्य समीपवर्तिनाम् ।
ललास काचित्स्वकुलस्य सद्गुणैः समेऽन्ववाये जनिताग्र्यकन्यका ॥

समुद्रपत्नी भवितेति सादरं प्रसाद्य वाणीमसृजत पितेति वा ।
सरोवरो नाभिरिवेति वा पुनः सरस्वतीत्येव जुहाव तां जनः ॥ ४१ ॥

विवेकनैपुण्यविनीतिदाक्षिणीपतीशभावप्रमुखा निजा गुणाः ।
सुजातमात्रा अपि शोभनाकृतेः समेनरास्ते सफला इवासते ॥ ४२ ॥

पदेपदे पल्लवकान्ति सम्पदा निगूढगुल्फे नखराः प्रभाकराः ।
निरस्तकूर्माकृतिनीचजानुनी करौ तदूरू करिणो मनोहरौ ॥ ४३ ॥

घनं तदीयं जघनं यथोचितं कृशं विलग्नं तु कुशेशयेशयौ ।
नखानि रत्नानि बिसानुजौ भुजौ गम्भीरनाभेर्गमनं विमोहनम् ॥ ४४ ॥

गलोतुलोस्याः फलके च तालुनी मुखं तदीयं शशिनास नोन्मुखम् ।
रदाश्च कुन्दान्यधरं सुधारसं समुन्नता गन्धफलीव नासिका ॥ ४५ ॥

शिशोरमुष्यास्तिलकस्य केलिनीसखस्य डोलेव ललाटपट्टिका ।
शतुष्कपर्दायसश्रृङ्खलाश्रिता ललन्तिकारत्ननिगुच्छराजिता ॥ ४६ ॥

तामुद्विवक्षुः सुरभौ समागते वटुव्रतानां च चतुष्टयं मुदा ।
विधाय भाष्यं लिखति स्म वेङ्कटो विकल्पितं सिन्धुनदीनिमज्जनैः॥४७॥

सगोपिकाम्बिकाग्रजः सुहृज्जनैस्समन्वितैः ।
उपाविशत्सुपूजितो मुदैव कन्यकापदम् ॥ ४८ ॥

श्रीमत्कश्यपवंशवार्धिशशिनः षड्दर्शनीवल्लभ
श्रीलक्ष्मीनरसिंहवित्तविदुषः श्रीवेङ्कटाम्बामणौ ।
जातेनार्यदयासुधामयगिरा नारायणेनोदिते
काव्ये चारुणि राघवेन्द्रविजये सर्गश्चतुर्थोऽभवत् ॥ ४९ ॥

इति चतुर्थस्सर्गः



## अथ पञ्चमस्सर्गः

अथ विवाहसमुत्सुककन्यकागुणमणी पितरौ निजमन्दिरात् ।
अगमतामभिवीक्षुतुमादराद्वरमुपागतमात्मपुरोदरम् ॥ १ ॥

द्रुतमुपेत्य वरं पितरौ चिरान्मुहुरवेक्ष्य मुदं समवापतुः ।
पदयुगप्रणतस्य यवीयसोऽस्य चतुरस्य समाशिषमूचतुः ॥ २ ॥

समसमाः परिषस्वजिरे मुदाऽधिकसमान्पृथुकाः प्रणमन्ति च ।
बहुवयोभिरिता बहुलाशिषं जगदिरे विविधेष्वपि बन्धुषु ॥ ३ ॥

निजगृहोपमनैजनिकेतनं जितविशालपुरं निजसंपदा ।
अनयतां विनयावनतं वरं ससुहृदं सुहृदा सह दम्पती ॥ ४ ॥

बहुविधं परमान्नरसायनं वरनरोभ्यवहृत्य तदाहृतम् ।
निबिडपट्टवितानकशीतलेप्यहह तुष्टुवुरातपभोजनम् ॥ ५ ॥

अभिदिदृक्षुजने वरमादरादुपगते भवनं तदनुज्ञया ।
कृतपरस्परसंकथनो जनः सुखमुवास निशामिह वेश्मनि ॥ ६ ॥

त्रिदशदेवदिशाधरकंधरे समुदिते नलिनीपरिणेतरि ।
त्रिपदया सवितारमृचा वरं परिणुवन्तमुपासत सज्जनाः ॥ ७ ॥

वसनवाहनकुङ्कुमचन्दनै र्विविधरम्यरसैः परिपूज्यतम् ।
त्वरितमारभताभ्युदयोत्सवं द्विजवरैः पितरौ सह सद्मनि ॥ ८ ॥

सगग्रवस्तूनि नवग्रहेभ्योप्यनुग्रहार्थं निरवग्रहार्थम् ।
कुतूहलात्तौ कुलदेवतायै समर्पयामासतुरादरेण ॥ ९ ॥

विरचय्य तु दीक्षितः प्रयाजं तनुते हन्त यथा प्रधानयागम् ।
अतनोत्किल कन्यकाप्रदानं मधुपर्कैरभिपूज्य तज्जनस्तम् ॥ १० ॥

वरमुखेन्दुविलोकनसंकुचल्लपनफुल्लसरोरुहकन्यकाम् ।
अयमश्यदियं च वराननद्विजसखं ससितोत्पलल्लोचना ॥ ११ ॥

इन्दुवदनाकलितमन्दहसनानां कुन्दरदनाहसितहंसगमनानाम् ।
कन्तुकसमाकृतिपयोधरयुगानां कन्तुनिजजङ्गमजयध्वजलतानाम् ॥

आगत्य द्रुतमबलाप्रहर्षणीकाप्यालोक्यागमनमनङ्गसायकाङ्गी ।
नारीणामुचिततराङ्गरागपुष्पैरानर्चे स्मितलपनातिरोहितासु ॥ १३ ॥

जितनीलकण्ठशुकमञ्जुभाषिणी परपुष्टसद्युवतिगीतगीतितः ।
सदनप्रियालकुसुमालयो वधूवरवीक्षणागतसुरार्पिता इव ॥ १४ ॥

प्रमिताक्षरामृचमनूद्य सुहृत्समुपाहृतान्यभिनवानि मुहुः ।
विविधां पुरोहितजनावनयो र्वसनानि संसदि समार्पयताम् ॥ १५ ॥

मथनसंस्कृतिसंततसंभ्रमत्सितगुरूज्ज्वलदीपकभाजनम् ।
भ्रमयतः स्म वधूवरसन्मुखं द्रुतविलम्बितमेत्य वराङ्गने ॥ १६ ॥

नानाविद्याशालिनीवृद्धिभाजां भूदेवानां भूषणै राजमाना ।
वेदानुच्चैरुच्चरन्ती किरन्ती दम्पत्योरित्याशिषः संसदूचे ॥ १७ ॥

बालावेतावाप्नुतां दीर्घमायुर्नित्यां प्रीतिं चाष्टपुत्रान्गुणाढ्यान् ।
शस्तं वित्तं संततिं शोभमानां सौख्यं धन्यौ धान्यभूगोसमृद्धिम् ॥

इन्द्राणी बलरिपुवैरिणीव वाणी लोकेशे कलशपयोधिकन्यकेव ।
गोविन्दे गरलगले गिरीन्द्रकन्या कन्या स्याद्दयितमनःप्रहर्षणीयम् ॥

नत्वा हरिं गुरुमनन्तरमार्यनारीसेवारतावसितवारिजलोचनाभिः ।
दृष्टौ वसन्ततिलकाविव तावभातां तत्रान्तरे सुकुतुकं सुमनःपरीतौ ॥

नियुज्य वंशस्थनितम्बिनीवधूपितावरीयार्यजनार्चनाकृते ।
वधूवरौ वारिजलोचनावुभौ परस्परं भोजयितुं प्रचक्रमे ॥ २१ ॥

भूदेवान्भोजयित्वा तदनु तदुचितैरम्बरैर्दक्षिणाभि-
स्ताम्बूलैस्तोषयित्वा विरचितनियमस्त्रीण्यहान्येवमेषः ।
विद्वत्सङ्घं निकामं विनयमुखगणैर्नन्दयन्वेङ्कटार्यो
दीक्षां प्राप्येव यज्वातदनु निशि मुदा शेषहोमं व्यतानीत् ॥ २२ ॥

आगच्छन्पथि वध्वा साकं सर्वैः समं निजग्रामम् ।
काननभूषु वधूनां दोहललक्ष्मीरपश्यदुरुमेधाः ॥ २३ ॥

चकितहरिणशावकेक्षणस्त्रीचरणहतोपि पुनः पुनर्यदीयः ।
ननु हसितरामशोकशाखी प्रकटयितुं नितरामशोकभावम् ॥ २४ ॥

कुरबकविटपे कुशेशयाक्ष्याः कुचयुगलस्तबकेन कोमलाङ्ग्याः ।
किमकृत समवायिना वसन्तस्तबककुलानि तदाकृतीनि यस्मिन् ॥२५॥

बकुलतरुरवाप्य वारिजाक्ष्या मुखरससेवनमुन्नतोऽबलायाः ।
प्रतिकृतिमकृतेव पक्ष्मलाक्ष्याः प्रसवपरंपरया तदङ्गभाजा ॥ २६ ॥

कुवलयदलनीललोचनाभिस्तिलकतरुष्ववलोकितेषु नूनम् ।
प्रतिफलितविलोचनानि नो चेत्समरुचिभाञ्जि कथं सुमानि तेषाम् ॥

परिहसनपराः पयोरुहाक्ष्यः सुमकपटेन हसन्तमाबबन्धुः ।
व्रततिततिभिरङ्गना न मेरुं परिहसतीति विलोक्य किं मदीयम् ॥ २८ ॥

करपरिमिलनात्कुशेशयाक्ष्याः प्रतिविटपं विकचत्प्रसूनशाली ।
सभयमभिनिरीक्षितावकाशो व्यपगतनिद्र इवास यत्र चूतः ॥ २९ ॥

कुवलयदलनीललोचनानां तनुरुचिमीक्षितुमीक्षितोङ्गनाभिः ।
तिलकतरुरुदग्रसूनजालैर्दशशतलोचनतामवाप नूनम् ॥ ३० ॥

शुकपिककलकण्ठकिन्नरस्त्रीस्मयहरविस्मयगानमानताङ्ग्याः ।
सकुतुकमुपकर्ण्य संमुदेन प्रसवकुलं प्रववर्ष किं प्रियालः ॥ ३१ ॥

अशोकवृक्षाः कमलेक्षणानां मनोज्ञपादाम्बुजताडनेन ।
उल्लासमापुस्सहसा तदानीं यथैव लीलाकमलैर्युवानः ॥ ३२ ॥

भुजालताभिस्तरुणीजनानां मदान्वितानां परिरम्भणेन ।
अगाद्विकासं कुरवोपि पश्चान्नदद् द्विरेफैः सुरवो बभूव ॥ ३३ ॥

चन्द्राननानां शफरेक्षणानां कुम्भस्तनीनां कुटिलालकानाम् ।
विलासिनीनां द्युतिमाललम्बे गण्डूषशीधोर्बकुलोवसेकात् ॥ ३४ ॥

आलोकनादायतलोचनानां मदोद्धतानां प्रकटानुरागम् ।
दधार शोभां तिलकद्रुमाणां पाली सभृङ्गैस्तबकैस्तदानीम् ॥ ३५ ॥

गीत्या महत्या कलकण्ठकण्ठ्या विकासमाधत्त तदा प्रियालः ।
तन्मञ्जरीषट्चरणादिगीत्या वियोगिनीचित्रमिदं विषादम् ॥ ३६ ॥

पद्माननानां वदनानिलेन श्रियं विवव्रे खलु सिन्धुवारः ।
बाह्वालतास्पर्शनतो रसालस्तदाङ्कुरैः कण्टकितो व्यलासीत् ॥ ३७ ॥

वार्ताविशेषैर्वनजेक्षणानां पिकप्रियानिःस्वनलालनीयैः ।
उदङ्कुरोभूदथ कर्णिकारो रागश्च यूनां हृदये तदानीम् ॥ ३८ ॥

मुखानुरागान्महिलाजनानां चाम्पेयशाखी नवपल्लवौघैः ।
समुत्थितैस्तत्क्षणजातशोभैस्तदाऽनुरागी समभूद्विचित्रम् ॥ ३९ ॥

यासां नमेरुः कुचगौरवेण तुलायितो नाजनि हासपात्रम् ।
नकारयुक्तत्पदवाच्यभूरुहो जहास हासैः कुसुमैश्च तासाम् ॥ ४० ॥

षडङ्घ्रिसंघारवकैतवेन गायन्मुदा माधवकीर्तिमुच्चैः ।
द्विजप्रवेकैर्य्यरुचत्प्रवीतः शुको यथा तत्र हि किंशुकद्रुः ॥ ४१ ॥

किंशुकः कुसुममालया वने फुल्लया च नितरां विदिद्युते ।
दानवारिमसुरान्त्रमालया मण्डितं खलु विडम्बयन्निव ॥ ४२ ॥

स इत्थमालोक्य वनं गतानां विलासिनीनां विहृतिप्रभेदान् ।
उपेन्द्रवज्रायितकायसारो गृहं प्रविश्याब्दगणान्मुमोद ॥ ४३ ॥

श्रीमत्कश्यपवंशवार्धिशशिनः षड्दर्शनी वल्लभ
श्रीलक्ष्मीनरसिंहवित्तविदुषः श्रीवेङ्कटाम्बामणौ ।
जातेनार्यदयासुधामयगिरा नारायणेनोदिते
काव्ये चारुणि राघवेन्द्रविजये सर्गोऽभवत्पञ्चमः ॥ ४४ ॥

इति पञ्चमस्सर्गः



## अथ षष्ठस्सर्गः

वध्वा साकं तत्र तुण्डीरदेशे वासं कृत्वा वेङ्कटार्यो महात्मा ।
वंशाचार्यं श्रीसुधीन्द्रं दिदृक्षुः चारुप्रज्ञः प्राविशच्चोलदेशम् ॥ १ ॥

मन्दंमन्दं मारुतस्पर्शमात्रात् निर्मर्यादं यत्र निष्यन्दमानैः ।
माकन्दानां मार्गभूमध्यगानां पृथ्वी चैत्रेष्वात्तपङ्का मरन्दैः ॥ २ ॥

सह्यक्ष्माभृन्नन्दिनीतीरदेशे भूयोभूयो भूसुपर्वाग्रहाराः ।
ग्रामे ग्रामे तद्गृहाणां सहस्रं गेहेगेहे पण्डिता एव सर्वे ॥ ३ ॥

ग्रामेग्रामेऽध्यापका जातमात्राः गेहेगेहे सर्वशास्त्रागमानाम् ।
सायंप्रातर्होमधूमातिनीलं रूपोपेतं यत्र नीरूपमभ्रम् ॥ ४ ॥

नित्यं यस्मिन् उर्वरैवाखिला भूः सालाः पूर्णा एव सर्वे फलौघैः ।
पृथ्वीदेशादीक्षिता एव सर्वे सह्यक्ष्माभृन्नन्दिनीसन्निधानात् ॥ ५ ॥

देशे तस्मिन् भूमिभूषायमाणे कुर्वन्वासं कुम्भघोणे सुधीन्द्रम् ।
दृष्ट्वा नित्यं मानितस्तेन विद्याभ्यासोद्युक्तो वेङ्कटार्यो विशिष्य ॥ ६ ॥

शाब्दं भाष्यं जायदेवीं च टिकां भाट्टं तन्त्रं भामतिं गौरवञ्च ।
व्यासर्योक्तां चन्द्रिकां वेकटार्यः यद्यद्वेद्यं तत्तदभ्यस्यति स्म ॥ ७ ॥

प्रातः स्नात्वा साधु वेदान्तभाष्यं शाब्दं पश्चात्तर्कशास्त्रं ततस्सः ।
पूर्वं तन्त्रं चावेदन्वेङ्कटार्यो तुर्ये यामे कांश्चिदब्दानमैषीत ॥ ८ ॥

द्रष्टुं कृष्णं दक्षिणद्वारकेशं प्राप्तस्साकं वेङ्कटो दैशिकेन ।
मायावादिव्रातमध्ये निषण्णं कंचिद्भिक्षुं दृष्टवान् वावदूकम् ॥ ९ ॥

ब्रह्माभिन्नोजीवसंघः कुतस्त्वं ब्रूहीत्युक्ते केनचित्तद्बुधेन ।
मिथ्या यस्माद्विश्वमित्युक्तमात्रे किंचतोऽस्मिन्नात्र मानं त्वयोक्तम्॥१०॥

शास्त्रे नोक्तो न श्रुतः केनचिद्वा यः किंचातः शब्द उक्तस्त्वयेति ।
उक्ते तेन प्रावदद्वेङ्कटार्यो व्यक्तंयस्त्वं नाशृणोः शाब्दभाष्यम् ॥११॥

श्रुत्वाकोपात्तस्य शिष्योथ कश्चिद्दाष्र्यं क त्वं क्वेदृशस्तेऽभिमानः ।
पृष्टश्चेत्तां प्रक्रियां किं ब्रवीषीत्युक्तस्तेनानुक्तवानेवमेषः ॥ १२ ॥

दण्डेनान्यस्ताडितः कुण्डलीव[1]प्साधातोर्यङ्लुगन्तस्य रूपम् ।
शत्रन्तस्येत्यर्धवाक्ये स[2] पाप्सत्तस्येत्युक्त्वा वादिनं पृच्छति स्म ॥१३॥

एतद्धातोः किं यगन्तस्य रूपं ब्रूहीत्युक्ते चिन्तयन्नर्धयामे ।
तत्रत्यानां दैशिको मायिभिक्षुस्तूष्णीमासीदुत्तरेऽभासमाने ॥ १४ ॥

दृष्ट्वा सर्वं दैशिकः श्रीसुधीन्द्रः प्रागज्ञातं कौशलं शाब्दभाष्ये ।
प्राचीनाख्यां तां महाभाष्यपूर्वां प्रादादस्मै पश्यतां पण्डितानाम् ॥१५॥

तञ्जापुर्यामन्यदा शुल्बसूत्रं व्याख्यातारं वावदूकं जयन्तम् ।
राज्ञो विद्वान्यज्ञनारयणेज्याशीलोत्तंसस्तं ननन्दातिमात्रम् ॥ १६ ॥

कालेनास्मिन् काकतालीयशब्दे जेतारं तं यायजूकान्कवीन्द्रान् ।
तस्यां पुर्यां तप्तमुद्राङ्कने च प्रौढं मेने यज्ञनारायणस्तम् ॥ १७ ॥

विद्योद्योगाद्वासरान्यापयन्तं प्राप्तौन्नत्यं पातुकं निर्धनत्वम् ।
अत्यासन्नश्रीनिदानेन्दिरेशध्यानोपायो बुद्धिवार्धिं सिषेवे ॥ १८ ॥

---

पा. [1] स्थाधातोः
[2] सथात्सत

अब्दस्यैकं वत्स्यतो नास्य नव्यं स्थूलं वस्त्रं संततं चाल्पमौल्यम् ।
नव्यं वस्त्रं नैव सूक्ष्मं कदापि क्षौमे तस्मिन् का कथाकिंचनस्य ॥१९॥

तैलाभ्यङ्गं वत्सरस्यैकवारं नैतस्यास्ति प्राज्यमाज्यं कथं स्यात् ।
अग्निष्टोमे नाधिकारी कथं स्यात् ज्योतिष्टोमेज्यांत्यसंस्थादिकारी॥२०॥

कालेकाले लभ्यते नास्य भुक्तं लब्धं चेत्तद्भुज्यते हन्त भूमौ ।
पात्राभावादेकदा नार्थितेपि क्षुद्बाधायाः शान्तिमेवालभिष्ट ॥ २१ ॥

छिन्ने वस्त्रे भिन्न पानीयपात्रे जीर्णस्थल्यां दस्युभिर्नीयमाने ।
प्रागाकृष्टं भाविकौपीनमस्य छागे यागे प्रागिवाभूत्प्रयाजः ॥ २२ ॥

विष्णोरेको वासरो वर्धमानेऽलोके कॢप्तः पञ्चषस्तस्य गेहे ।
इष्टौ पञ्चैवोदितास्ते प्रयाजाश्चातुर्मास्येष्वेधमाना नवासन् ॥ २३ ॥

पश्चाल्लब्धा यादृशी श्रीस्तदीयैस्तस्याः साम्यं लभ्यते चेत्कदाचित् ।
अप्येतस्याः सम्पदो नोपमानं लभ्यं लोके सम्यगालोचितेपि ॥ २४ ॥

एवं चेदप्यादराद्घोक्तृचिह्नं सन्धार्यायं शास्त्रमुख्यादजस्रम् ।
हर्षं प्राप्ता ह्यात्मधर्मानुरूपा पत्याकारस्पर्शनालापजातम् ॥ २५ ॥

दृष्टस्वप्नः श्रीसुधीन्द्रोथ विद्यासाम्राज्यार्हं तं पयोधिं गुणौघैः ।
ज्ञात्वा विद्यासंप्रदायं स गोप्तुं पारिव्राज्यं प्रार्थयामास धीरम् ॥ २६ ॥

क्वाहं न्यासः कुत्र वा वेदविद्यासाम्राज्यं ते क्वापि विद्याऽहमार्य ।
पारं सिन्धो भारमूढ्वा विवेकी गन्तुं यत्नं को जनः संतनोति ॥२७॥

इत्युक्तस्तं प्राह नावोहि बह्वः शान्तिर्दान्तिर्धीरतोदारता च ।
केतुस्तासां मत्प्रसादो गरीयान् विद्यन्ते किं दुर्घटं सिन्धुयाने ॥२८॥

एकान्ते तैर्बोधितः प्रत्यवादीद्वाला भार्या बालको नोपनीतः ।
बालश्चाहं नाश्रमे मेस्ति वाञ्छा निर्बन्धश्चेन्निर्गमिष्यामि नूनम् ॥२९॥

श्रेयोतीते कीदृशोत्रानुरागः का वा भार्या जानतो नन्दनः कः ।
स्त्रीसम्पर्को दुःखदाय्येव नूनं दृष्टान्तोस्मिन्वालिधर्मात्मजाद्याः ॥ ३० ॥

अक्ष्णा काणं कर्णपर्यन्तनेत्रं लोभागारं सन्ततौदार्यभाजम् ।
सन्ध्योपासावर्जितं यायजूकं दुष्टाचारं साधु कर्माचरन्तम् ॥ ३१ ॥

क्रूरं शान्तं रागशीलं विरक्तं मत्तं मुग्धं बुद्धिमन्तं युवानम् ।
दुष्टं साधुं दुर्विनीतं विनीतं लक्ष्मातीतं लक्षणौघैरुपेतम् ॥ ३२ ॥

ओंकारज्ञं साङ्गसर्वागमज्ञं वैरागारं वर्धितस्निग्धभावम् ।
अज्ञोत्तंसं ज्ञानिनामग्रगण्यं व्यक्ताकूतं लब्धगम्भीरभावम् ॥ ३३ ॥

गत्वागम्यं पूजयित्वाप्यपूज्यं सोढ्वा मानं तेन चादाय किञ्चित् ।
नालम्बुद्धिर्दीयमानेपि तासां जातात्मानं क्लेशयित्वापि नूनम् ॥३४॥

वेदव्याख्यासम्पदो नैव युक्ता व्यासंगे ते मज्जतो गेहजाते ।
तस्मादाशां मुञ्च तस्यां तरुण्यां शीघ्रं कुर्या बालमञ्जोपनीतम् ॥ ३५ ॥

श्रुत्वाऽश्रुण्वन्नेवमुक्तं गुरूणां गत्वायादेप चिन्तां दुरन्ताम् ।
निर्यायादित्येष निश्चित्य तावन्मर्त्यैरेतै रक्षति सैनमेषः ॥ ३६ ॥

स्थास्यामश्चेल्लभ्यते संयमित्वं गच्छामश्चेत्तेऽधुना मां शपेरन् ।
स्थातुं शक्यं नैव गन्तुं च शक्यं कुर्मः किं वेत्यात्मनाऽध्यायदित्थम् ॥

कर्णाकर्णी प्राप्य हृत्कर्णशल्यं कान्तोदन्तं सा सरस्वत्युदग्रैः ।
अश्रुव्यूहैः प्रोक्षतीवात्महव्यं पूतं दातुं तद्वियोगानलाय ॥ ३८ ॥

तस्यां रात्र्यामन्त्ययामार्धभागे कांचिद्देवीं काञ्चिकालक्ष्यनीवीम् ।
शय्योपान्ते शारदाम्भोजनेत्रामध्यासीनां विस्मितः पश्यति स्म ॥३९॥

कैषा योषा काञ्चनानर्घ्यभूषा दोषाधीशानना चारुवेषा ।
दोषातीता सान्द्रधम्मिल्लदोषा भाषादेवी सर्वसाक्षान्मनीषा ॥ ४० ॥

यद्वा नारी किन्नरी वोरगी वा देवस्त्री वा हन्त या काचिदस्तु ।
कस्मादेषाऽभ्यागता मत्समीपं प्रोवाचैषा चिन्तयन्तं तमित्थम् ॥४१॥

कानीनोसौ कन्यकाभावमादाद्भोग्याया मे संततं पण्डितानाम् ।
तस्माज्जातानन्दतीर्थप्रियाऽहं विद्यालक्ष्मीं विद्धि मां विद्वदाद्य ॥४२॥

बालामेनामेधयामास मध्वे भाष्यक्षीराब्ध्यासवाक्कामधेनोः ।
अक्षोभ्यश्रीपादशिष्याग्रगण्यैः प्रौढोत्तंसैः प्रापितं यौवनं मे ॥ ४३ ॥

उर्वी सर्वा येन राजन्वतीत्वं राज्ञा हन्त प्राप यत्पादभाजा ।
तेषां व्यासाचार्यराजेश्वराणां संगृह्याहं पाणिमद्धा समिद्धा ॥ ४४ ॥

आकल्पं मेऽकल्पयज्जीवनेच्छोर्वासं वल्ग्यास्तर्कनाट्योत्सुकायाः ।
सौधायान्न्यायामृताद्वृद्धिमत्यास्तात्पर्याद्या चन्द्रिकाख्या स यस्याः ॥

विख्यातो यः श्रीजयीन्द्रव्रतीन्द्रस्सख्या लब्धा साधुकीर्तिर्मयोर्व्याम् ।
व्याख्याव्याजादालवालं व्यतानीत्तस्या वल्ग्या न्यायपूर्वामृतस्य ॥४६॥

चित्रैर्वर्णैः शोभितं श्लाघितार्थं व्याप्तं देशे क्षौमवासेतिनूलम् ।
प्रायच्छन्मे कण्टकोद्धारदम्भादाचन्द्रार्कस्थायि चारुप्रभावः ॥ ४७ ॥

भूषापेटीं तत्त्वमाणिक्यपेट्या मुक्ताभूषां न्यायमुक्तास्रजा मे ।
यद्यत्क्लृप्तं भूषणत्वेन वध्वास्तत्तद्ग्रन्थैरातनिष्टातुलश्रीः ॥ ४८ ॥

वादे नित्यं वैरिविद्वज्जयश्रीराजस्थाने प्रापिता मां त्वयेति ।
व्याख्याव्याजात्तर्कनृत्तस्य मह्यं रङ्गस्थानं निर्ममे श्रीसुधीन्द्रः ॥ ४९ ॥

व्यासेनोक्तं व्याकरोयद् द्वितीयस्कन्धं प्रायो दुर्गमेकादशं च ।
मौलेरग्रे मौक्तिकं तन्ममासीन्नर्मारामं नाटकं चित्रगद्यम् ॥ ५० ॥

सर्वं व्यर्थं भाति मे जीवनाड्याश्छिन्ने मूले चन्द्रिकासौधवल्ल्याः ।
व्याख्यानात्त्वं व्याकरोरूढमूलां धर्मी नोचेद्धर्मचिन्ता क्व दृष्टा ॥ ५१ ॥

जानीहि त्वं वेङ्कटार्य त्वदार्यै वासो यन्मे वत्सरद्वन्द्वमेव ।
तद्व्याख्याने लब्धवर्णो न चास्ति विद्वत्सङ्घे नैव भावी त्वदन्यः ॥५२॥

श्रीरामार्चा पूज्यते येन तस्मिन् वासो यन्मेकल्पयद्व्यासदेवः ।
कर्मन्दीन्द्रैरेव पूजापि क्लृप्ता तस्मात्साहं तेषु नित्यं वसामि ॥ ५३ ॥

तस्मादङ्गीकृत्य कर्मन्दिभावं राजा विद्याराज्यलक्ष्म्या भव त्वम् ।
नोचेल्लुम्पेन्नित्यवाचां विचारैः साकं लोके वैष्णवः संप्रदायः ॥ ५४ ॥

उत्सूत्रत्वं केवलं नाद्यपक्षे न्यायौघानां किं तु तत्पुस्तकानाम् ।
रक्षाभावाद्भक्षणान्मूषिकानां मायावादिब्रह्मवन्निर्गुणानाम् ॥ ५५ ॥

आद्ये तन्त्रे प्रक्रियायां विचारस्तत्रैव स्यात्कर्मणां निर्णयोपि ।
किंचात्रैव न्यायपूर्वां सुधाख्यां भाष्यारम्भे शाब्दिका एव कुर्युः ॥५६॥

वक्ता विष्णोरुत्तमत्वं कथायाः भूपालानां भाति विद्वत्सभायाम् ।
शक्तेर्भानोः शक्तिपाणेर्गणेशः शक्रादीनां धूर्जटेर्वा तदा स्यात् ॥५७॥

छात्रागारं शश्वदेकप्रकारं वेदोद्घोषैर्वैदिकानामुदारम् ।
गोमायूनां जल्पकानामजस्रं कारागारं सर्वदेशे तदानीम् ॥ ५८ ॥

बृन्दानीव क्ष्माधराणां तदानीं हेत्या जिष्णोश्छिन्नपत्राणि कीटैः ।
वेदान्तानां पुस्तकान्यार्यलोके पर्णोज्झानि स्युर्महापाठकानाम् ॥ ५९ ॥

आचार्याणां कर्मठानां मठानां वेद्यां विद्यात्तत्त्वमिथ्यात्ववादः ।
मर्त्याभावाद्वासनावासितानां तत्रत्यानामण्डजानां तदानीम् ॥ ६० ॥

देवागारं दैशिकानां प्रदीपज्वालामालादीप्यमानं तदा तु ।
सूर्यालोकं संश्रितोलूकलोकं सूर्यालोकेनोज्झितं नो लभेत ॥ ६१ ॥

हन्तेदानीं देवताया गुरूणामर्चागारं गुग्गुलुव्यूहधूमैः ।
दीपैर्दीप्तैर्दीप्यमानं तदानीं नित्यासक्तालातभूतास्यदीपैः ॥ ६२ ॥

उल्लोचानामुन्नतानां प्रकीर्णैः धूलीवृन्दैर्धूसरा केतकानाम् ।
वेदी स्यात्तद्देवतामन्दिराणां रथ्या धूलीधूम्रवर्णा तदानीम् ॥ ६३ ॥

नेदानीमेतादृशः संप्रमोदः पारिव्राज्यं यादृशः प्राप्यते चेत् ।
संप्राप्ता त्वां न त्यजामि क्षणं वा स्वप्ने वाऽहं न स्मराम्यन्यभिक्षुम् ॥

विध्यायत्तं ते यतित्वं न शक्यं त्यक्तुं प्राप्तुं त्वद्वशत्वं ममापि ।
इत्युक्त्वा सा मन्त्रमस्योपदिश्य स्वीयं देवी पश्यतोन्तर्दधेऽद्धा ॥ ६५ ॥

भूयोभूयो बोधितस्साधकैस्तैः पारिव्राज्यं बाधकैरन्यथात्वे ।
स्मारंस्मारं देवतोक्तं च विद्वानुद्युङ्क्ते स स्वात्मजस्योपनीतौ ॥ ६६ ॥

सोमादिभ्यो देवताभ्यः प्रदानं पुत्रस्यैतन्मुख्यमेवंविधस्य ।
लोके गौणं नूनमित्थं वदन्तं दृष्ट्वा को वा नाश्रु सर्वो मुमोच ॥ ६७ ॥

संन्यासश्चेद्दीयतेऽत्रैव मोहाद्भार्या कुर्यात्साहसं तस्य नूनम् ।
इत्यालोच्य श्रीसुधीन्द्रोऽथ योगी साकं यायात्तेन तञ्जापुरीं सः ॥६८॥

आशापाशा वैरजा होमसंस्था संस्थाकेसत्येष निघ्नंस्तमांसि ।
स्नातस्सिन्धोरुद्गतो दीधितीनां धामेवायं भाति रक्तांशुकश्रीः ॥ ६९ ॥

लग्ने लग्नगुणे निलिम्पगुरुणा दृष्टे विमृष्टे द्विजै-
रेनं संमदभागधीहि भगवो ब्रह्मेत्युदीर्य स्थितम् ।
आलोक्योपदिदेश देशिकवरस्तस्मै सतारं पुरा
स्वप्नेऽस्वप्नदुरापवैभवनिधिर्लब्धां ददौ चाभिदाम् ॥ ७० ॥

तस्य नाम स ददे सदाशिषा राजराज इव राजितः श्रिया ।
रामभद्र इव भद्रभाजनं तत्कृपेव जगतां हिते रतः ॥ ७१ ॥

श्रीसुरेन्द्रवदयं तपस्यया श्रीजयीन्द्र इव कीर्तिसम्पदा ।
विश्रुतोहमिव वादसङ्गरे राघवेन्द्रयतिराट् समेधताम् ॥ ७२ ॥

मन्त्रैः पूतैर्वारिजाद्यैः प्रसूनैर्मुक्तामुख्यै रत्नजालैरुपेतैः ।
वार्भिः शङ्खापूरितैः सोभिषिच्य प्राज्ञं विद्याराज्यराजं वितेने ॥७३॥

श्रीरामार्चां व्यासदेवोपलौ द्वौ शास्त्रौघानां पुस्तकं चामरे च ।
श्वेतच्छत्रं स्वर्णयानं सवाद्यं प्रादादस्मै राजचिह्नं स सर्वम् ॥ ७४ ॥

आचार्ये राजमाना श्रुतिशिखरकला राज्यलक्ष्मीः सुधीन्द्रे
मुक्त्वा तं तुङ्गभद्रातटभुवि गुरुभिर्भ्राजमानं तपोभिः ।
राजन्तं कुम्भघोणे रघुपतिचरणासेवनासक्तचित्तं
विद्वांसं वर्धमानं गुणगणजलधिं संश्रिता राघवेन्द्रम् ॥ ७५ ॥

श्रीमत्कश्यपवंशवार्धिशशिनः षड्दर्शनीवल्लभ-
श्रीलक्ष्मीनरसिंहवित्तविदुषः श्रीवेङ्कटाम्बामणौ ।
जातेनार्यदयासुधामयगिरा नारायणेनोदिते
काव्ये चारुणि राघवेन्द्रविजये सर्गोऽद्य षष्ठोऽभवत् ॥ ७६ ॥

इति षष्ठस्सर्गः



# अथ सप्तमस्सर्गः

॥ श्रीगुरुभ्यो नमः हरिः ॐ ॥

स कदाचिदादृतमना हरेः स्थलान्यखिलानि पुण्यसरसीश्च वैष्णवीः ।
अवलोकितुं यतिवरो धृतव्रतः प्रथमं सुरप्रभुदिशं प्रतस्थिवान् ॥ १ ॥

अनमन्नमज्जनमनोविनोदनं द्विपरीशमीशमघराशिभञ्जने ।
अगमत्ततो निगमगीतसद्गुतः परिपूर्णदेवनगरं गुणाकरम् ॥ २ ॥

अथ लोकमातरमवन्दतेन्दिरामनवद्यहृद्यमणिशृङ्गमन्दिराम् ।
वदनेन कान्तिसदनेन पुष्णतीं नमतो निरस्तममतो यतीश्वरः ॥ ३ ॥

गुरुपूर्णबोधमतसिन्धुचन्द्रमा यतिराडुपादिशदगाधमेधसाम् ।
अथ मानपद्धतिपुरःसरं कृती निजदर्शनं निखिलसम्पदां पदम् ॥ ४ ॥

कमलालये कमलया कटाक्षितो यमिराडवाप यमराडपायदम् ।
प्रणिनंसुरर्थमहिलं कृपोर्मिलं सरलं श्रितेषु गरलं खलेखिले ॥ ५ ॥

सततं प्रणम्य सततादिनिस्वनो धिषणाभिनन्दिधिषणो धुतेषणः ।
समगादगाधपयसा पयोधिना सह सङ्गमं सपदि सह्यजन्मनः ॥ ६ ॥

इह दातुमस्य यतिपुङ्गवस्य सा महनीयरत्नमथ रत्नगर्भया ।
धृतमन्तरात्मुदितादरा भुवो विवरं विवेश विवशैव सम्भ्रमात् ॥ ७ ॥

अवगाह्य सह्यतनयासरस्वतोर्विमले चिरं व्यतिकरे व्यराजत ।
हृदि भावितो हरिरिवोदितस्तथा सरिदीशदर्शनकृतानुसंमदः ॥ ८ ॥

अधिरुह्य तीरमविपह्यतेजसां निलयं कृताघविलयं कृपालयम् ।
कलयन्नुवास दलयन्तमापदं मुरहारिणं मुनिवरो हृदन्तरे ॥ ९ ॥

हृदि बद्धशुद्धिभिरुदारबुद्धिभिः प्रतिषिद्धसिद्धजनगर्वसिद्धिभिः ।
परितो वृतः परिजनैरुपेयिवान् स तु चम्पकाधिपपुरं ततः परम् ॥

स ददर्श देवमतिदर्शनश्रियं हरिभक्तिदर्शनविरोधिदर्शनः ।
चिरमास्त तत्र परमास्तिकाग्रणीर्हृदि मेस्तु लोलमतिवस्तु संस्तुवन् ॥

न्यनवीदथैनमनवीनवाग्झरीशिरसां विकल्पवचसां निगुम्भनैः ।
परिभक्तिपूरपरिवाहमोहदैः परिणद्धभक्तजनचित्तसंपदैः ॥ १२ ॥

हृदि बोधदुग्धरसवासनाकृतेः परिनिर्मिताविव पयोजतल्लजौ ।
अपवर्गमार्गपरिबोधनाय मे चरणौ तवेश किमु चिह्नपल्लवौ ॥ १३ ॥

उपरिश्रितेन पुरतश्च नश्वरव्यवहारदूरगगिरामनावृतम् ।
प्रणवद्वयेन मणिनूपुरात्मना परिकर्मिते तव पदेपदे मुदाम् ॥ १४ ॥

रुचिवारिपूररुचिरं भुजान्तरं शिशिरं तटाकमवगाह्य तावकम् ।
त्यजति श्रमं व्रजति हर्षमद्य मे भवघर्मतापमपनीय दृग्गवी ॥ १५ ॥

अरुणाधरं तरुणचन्द्रसुन्दरं करुणाधरं वदनमीश तावकम् ।
स्मितकान्तिपूरनवचन्द्रिकाभरैर्भव शार्वरं क्षिपति भव्यचेतसाम् ॥१६॥

परितः स्थितेपि चिकुरौघशार्वरैर्विलुठद्भिराननविधौ विभाविते ।
तिलकेन नद्धकुलकेन सा दरं नहि वेत्ति बालतममत्युदारगीः ॥१७॥

अलकावृतालिकमुदारमुन्नसं स्मितफुल्लगण्डतलमुल्लसन्मुखम् ।
दरवामभागनतमौलिमोहनं तव देव नैव हृदयं जहातु मे ॥ १८ ॥

इति बाष्पगद्गदतयाऽतिमन्थरं प्रमदप्रवाहकृतकान्तिकन्धरम् ।
रचितस्तुतिः कृतनतिस्समेयिवान् स तु रामसेतुमवलोकनोत्सुकः॥१९॥

अथ लोचनातिथिमसावपांनिधिं निधिरर्हणीयमहसामुदारधीः ।
अकरोदपारमकरोदपांकुलं सुकरं श्रमापनयशक्तिशीकरम् ॥ २० ॥

मुनिधुर्यदर्शनकुतूहलादिव प्रथमं प्रधावितमहोर्मिमुत्सुकः ।
अनुधावितास्सरभसं यदूर्मयः पुरतोऽभिगन्तुमलसा विचुक्रुशुः ॥२१॥

पुरतस्समुद्यततरङ्गहस्तया समुदीतपन्नगफणामणीगणैः ।
धृतमङ्गलार्थमणिदीपमालया यतिराडसेव्यत तदीयवेलया ॥ २२ ॥

वदने विधुं करतले सुरद्रुमं नयने सुधामधिमनः श्रियं च यः ।
निजसन्ततिं यतिवरेऽनुसन्दधन्मुदितो ननर्त स तरङ्गरिङ्गणैः ॥ २३ ॥

अपि सैकतं बहुतरङ्गसंकुलं तटमक्षमस्स तु किलातिलङ्घितुम् ।
अत एव भङ्गमतिनैल्यमप्यगादयशोभरेण सुयशोहरेण यः ॥ २४ ॥

हृतकल्पभूरुहतया पुनश्च भाजककल्पकल्पतरुरोहणाय यः ।
हलसंस्कृतो लहरिभिस्समन्ततः सकरीषराशिरपि सान्द्रशैवलैः ॥ २५ ॥

परिवृत्य पूरितजलामपां श्रमिं स्फुरितास्फुरद्रुचिरविद्रुमां प्रगे ।
कवयो हि यत्र वरुणालये निशाकृतदीपशान्तिमभितः शशङ्किरे ॥

यतिनेतृवादरणधुर्यभास्करे प्रकटीकृते हि पतिना रसातलात् ।
तमसां ततिर्यदभियाद्भियोद्गता बहिरप्युदीक्षितुमभूज्जडीकृता ॥ २७ ॥

मुखराण्डजा मणिमरीचिमौक्तिकैः प्रकटप्रवालमुकुला यदूर्मयः ।
मरुता नतोन्नतिभृतो विरेजिरे वरुणालयोपवनशाखिका इव ॥ २८ ॥

अमुमेत्य मुख्यतममाश्रयं निजं हरिरेष मां प्रतिनिधिं त्यजेदिति ।
लुठति स यस्सभयमूर्मिभिश्श्वसन्निजरोधसि क्षितिगवीव रोधसि॥२९॥

सरिदीशितुः प्रतिसरित्कृतोदयाः पुरतोऽस्य मारपृथुका वितन्वते ।
रभसेन यस्य लहरीकशाहता भ्रमिकैतवेन लिपिलेखनक्रियाः ॥३० ॥

अपि शेषपूर्वकपुनस्स्थितिस्थितावपि पूर्वपश्चिमदिशोरुदन्वति ।
न कथाभिदेति विभुना भिदा कृता कृतसेतुना लसति यः पयोन्ततः ॥

छिदुरस्य यस्य रघुवीरसायकैर्वसुधापटस्य विवरं निषीव्यता ।
विधिना कृता नु नवसन्तुसन्ततिर्नलसेतुना नवमनन्यदिच्छता ॥३२॥

मरुदुल्लसल्लहरिनीविसन्ततेर्गुरुपूरनामवरुणालयच्छदेः ।
यदि याति यत्र दृढमध्यवंशतां नलसेतुरेतु भवघर्मभञ्जनः ॥ ३३ ॥

सुमसौभरेण जनरञ्जनोन्मुखे तटनामके धरणिसुन्दरीमुखे ।
निदधात्युदग्रनलसेतुनासिकं मुखमात्मनश्चलितविश्वतोमुखम् ॥ ३४ ॥

रघुवीरदुस्तरशराग्रशोषिते यदगाधतापललसञ्चयेखिले ।
अतनिष्ट सेतुरदसीयपृष्ठतः स्फुरदस्थिवंश इति संशयं मुहुः ॥ ३५ ॥

परिशोषितं कलिबलेन यत्पदं सुकृतस्य यत्कृतभयं यदन्तरे ।
जलदुर्गमेत्य कलितापदुर्गमं विधुनोति सेतुवपुषा विरोधिनाम् ॥३६॥

परिमार्ष्टुमात्मतनयाश्रुशोकजं सव्रणं भुवा भुजलता प्रसारिता ।
क्षितिसुन्दरी न किरतीति यज्जले नलसेतुरस्तु कृतचूर्णपद्धतिः ॥३७॥

अवलोक्य सेतुमवलोक्य वैभवं कमलेशकान्तिरमलाशयस्ततः ।
परपूर्वसिन्धुपरिणीसमागमे स ममज्ज पाथसि नमज्जनावनः ॥ ३८ ॥

उपसाद्य तीरमवसद्यमादिमैस्स नियम्य चित्तमनियम्यसम्पदम् ।
रघुवंशदीपमघदंशभञ्जनं सदयं विधाय हृदयं प्रवेशितम् ॥ ३९ ॥

अवनीसुधाशसवनाशभूरुहो वनशैलमाप वनराशितस्ततः ।
भवनाशनं सपवनाशशायिनं नमनैरुपेतुमवने कृतादरम् ॥ ४० ॥

प्रथिते यदीयशिरसि प्रसेदिवान्सततं विधुर्यदि समग्रतेजसा ।
कलयेत को नु कथमित्यसन्मतिं स तु रम्यपर्वत इति श्रुतो यतः ॥४१॥

यदुदग्रशृङ्गतरुसङ्घसेचने न घनाघनो न च वियन्नदी प्रभुः ।
शबराङ्गनाचतुरगीतिकाद्रवदृषदां शिरस्सु निपपात तद्भरः ॥ ४२ ॥

मधुरे यदीयशिखरेतिभास्वरे मुनयो विमुक्तिगतये समुद्गताः ।
अनवेक्ष्य हन्त सृतिमच्चरादिकान्न भवं व्रजन्ति हरिभक्तिगौरवात् ॥

विदधाति सिद्धमहिलाजनो विधुं रजनीषु यस्य शिखरे तिरोहितम् ।
स्तनवाससा परिविधूपलस्रवज्जलवर्षशान्तिमभिलक्ष्य कुत्रचित् ॥ ४४ ॥

प्रणिपत्य तत्र पुरुषं पुरातनं लसितं स सुन्दरवराभिधं हरिम् ।
निरगादनन्तशयनं ततो गुरुः प्रणिपत्य तं च समगाज्जनार्दनम् ॥४५॥

अधिताम्रपर्णि स निमज्ज्य तत्तटे लसिताः प्रणम्य नवदेवताः पराः ।
कृतमालिका सरिदलंकृतामगान्मधुराभिधां मधुरवाङ्महापुरीम् ॥४६॥

तददीशसंसदि विजित्य पण्डितान् बहुमानितो यतिवरो महीभृता ।
अभिवन्द्य सुन्दरवरं हरं शनैरथ रङ्गवल्लभमुपेयिवानयम् ॥ ४७ ॥

तत्र श्रीरङ्गनाथं तरुणतरणिऋग्वेदरूपे विमाने
कावेरीवारिपूरप्रसृमरपवनानन्दितानन्तभोगे ।
वन्द्यं देवैश्शयानं द्रुहिणभवमुखैरिष्टदं राघवेन्द्रः
सानन्दं तं प्रणम्य प्रकटितविभवं तां निशामत्यनैषीत् । ॥ ४८ ॥

श्रीमत्कश्यपवंशवार्धिशशिनः षड्दर्शनीवल्लभ-
श्रीलक्ष्मीनरसिंहवित्तविदुषः श्रीवेङ्कटाम्बामणौ ।
जातेनार्यदयासुधामयगिरा नारायणेनोदिते
काव्ये चारुणि राघवेन्द्रविजये सर्गोऽभवत्सप्तमः ॥ ४९ ॥

इति सप्तमस्सर्गः



## अथ अष्टमस्सर्गः

॥ श्रीगुरुभ्यो नमः हरिः ॐ ॥

श्रीशपादसरसीरुहभृङ्गो मध्वमौनिमतसिन्धुमृगाङ्कः ।
मानपद्धतिमुखं मतमाख्याच्चन्द्रिकान्तमसकृच्चतुरोसौ ॥ १ ॥

प्राप्य रङ्गपरिणेतुरनुज्ञां तन्नियुक्तसकलर्तुसहायः ।
तत्कृपाकवचमात्मनि कुर्वन्नुत्तरां दिशमगाद्गुरुतेजाः ॥ २ ॥

नामपर्वतमुपेत्य नृसिंहं नामसंस्मृतिधुताघजनौघम् ।
तं प्रणम्य तरुणार्कसमाभं तां निशामिह गुरुर्वसति स्म ॥ ३ ॥

सोथ भल्लपुरि भैरवभट्टो वीरभद्र इति विश्रुतविद्वान् ।
नर्मणैव परिभूय नरेन्द्राद्ग्रामरत्नमचिरात्समगृह्णात् ॥ ४ ॥

विष्णुमङ्गलपुरे विलसन्तं देवमीक्ष्य विपुलश्रियमस्मात् ।
संवृतः परिजनैः स कुमारक्षेत्रमेत्य नमति स्म कुमारम् ॥ ५ ॥

श्वित्रिणोपि यदुपेत्य विमुक्तास्सद्य एव निजपातकसंघात् ।
सर्वसंपदभिवृद्धिकरोस्मिन्वासरान् कतिपयान्वसति स्म ॥ ६ ॥

रौप्यपीठपुरगं रुचिराङ्गं रुक्मिणीपतिमपश्यदुदारात् ।
पूर्णबोधगुरुभिः सकलज्ञैः सन्निधापितमघौघविदूरम् ॥ ७ ॥

चन्द्रिकाविवरणं समतानीत्संचरन्नपि स पुण्यमहीषु ।
वेत्ति वर्णनिचयं समयानां संख्यया सह धियैष सहार्थैः ॥ ८ ॥

चन्द्रिकाप्रवचनं दशकृत्वः सोकृतातिशयमात्मनि वाञ्छन् ।
पूर्णमास इव कर्मणि भूयोभ्यासमभ्यधिकतत्फलकाङ्क्षी ॥ ९ ॥

सूत्रपात्ररुचिरं कलितर्धि न्यायपूर्वकसुधाज्यभरेण ।
तन्त्रदीपमनुबोधयदर्थं भाष्यवार्तिकमयं तनुते स्म ॥ १० ॥

ब्रह्मसूत्रगणकाञ्चनसूत्रां कण्ठभूषणमशेषबुधानां ।
बुद्धिशाणपरिशाणविदीप्तां न्यायमौक्तिकततीमतनिष्ट ॥ ११ ॥

चन्द्रिकाविवरणं न समाप्तं यावदेतदुभयं विरचय्य ।
न्यायगर्भनयवन्नयशाली तत्समापयदनन्तरमार्यः ॥ १२ ॥

भाव्यसंशयमहो गुरुवंशे दर्शनश्रुतिपरस्सुमतीन्द्रः ।
तस्य सार्थकमिदं सकलं स्यादित्यवेत्य कृतवान् कृतिसार्थम् ॥१३॥

राघवेन्द्रयतिराडसमानैरुत्सवैर्बहुविधैरुचितज्ञः ।
कारितै ऋतुषु षट्स्वपि शिष्यैर्लोकमण्डलमनन्दयदेषः ॥ १४ ॥

श्रीरामदेवस्य महोत्सवे हरिं विलोक्य तं सेवितुमादरादिव ।
मनोज्ञमाकन्दमरन्दधारया कृताभिषेकः सुरभिः समाययौ ॥ १५ ॥

मधुस्तदा मन्मथसार्वभौमे विनिर्गते मानभृतां जयाय ।
प्रसूनमाध्वीकणसेकतोसावरण्यवीथीरकरोदपांसूः ॥ १६ ॥

शनैःशनैश्चन्दनभूधराच्यान्मरुत्कुमारास्तरुपल्लवेषु ।
विन्यस्य पादं कुसुमैः सहासैः सचङ्क्रमोभूद्भ्रमरप्रणादः ॥ १७ ॥

वल्लरीषु मलयाचलानिलस्पन्दितासु परपुष्टभामिनी ।
कामदिग्विजयकाहलनादभ्रान्तिदं निनदमातनुते स्म ॥ १८ ॥

मल्लिकासुमसमुत्थरजोभिर्वल्लिकाभिरभितः कृतभूषः ।
मारनीरशरधिर्मधुमासः प्रादुरास पथिकासु दुरासः ॥ १९ ॥

आगतो जनिमधुर्मधुरश्रीर्मानमत्र ननु मन्दसमीरः ।
हन्त पान्थजन न त्यज कान्तामित्यघुष्यदधिकं कलकण्ठः ॥ २० ॥

चञ्चलद्युतिसमद्युतिचञ्चत्पल्लवावलिपरीतजनेषु ।
स्यन्दमानमधुवर्षिषु कामं वर्षवासरमहान्यनुचक्रुः ॥ २१ ॥

मारुताभिमुखषट्पदमण्डल्याकृतिस्मृतिभवापथिकेषु ।
अन्तकं मुधतयादिदीशे किं कुण्डलीकृतिरहो कुटिलेन ॥ २२ ॥

पुष्पपल्लवमुखेन महान्तं पर्युपास्त समयः पुरुषं यत् ।
माधवश्रियमगान्महनीयामप्रियामयमयोगिजनस्य ॥ २३ ॥

शाखिनः किसललोहितमौलिप्रावृतिं विरचयन्नृतुपुंसः ।
बाणमेव मदनोकृतबर्हिर्यष्टुमध्वगवधाय वनेषु ॥ २४ ॥

शातकुम्भमयकुम्भकुचानामङ्घ्रिपातमतिदुर्लभमेत्य ।
संमदेन सहसा किमशोकः कुड्मलैरभवदुत्पुलकाङ्गः ॥ २५ ॥

मत्रीकृतं विदधिरे सुमनोभिः स्वाङ्घ्रिसेवनमशोकमनङ्गम् ।
धार्मिकं च सुदृशः सततं तौ हन्त पान्थजनहन्तृपदे स्तः ॥ २६ ॥

पुष्पितस्य बकुलस्य समन्तादुद्गतास्सुमनसः सुमनोभिः ।
अङ्गनास्य मधुनाध्वगयूनामापदागमनमत्र शशंसुः ॥ २७ ॥

रामचन्द्रमथ रामनवम्यामिष्टदैवममृतैरुपक्लृप्तैः ।
पञ्चभिः परमराघवयोगी भक्तिपूर्वमभिषिञ्चति तत्र ॥ २८ ॥

मल्लिकायुवतियौवनधाता मन्मथप्रभुपरीभवदाता ।
काननज्वलनबालकमातावासरोजनि सरोजलपाता ॥ २९ ॥

जृम्भिते च मिहिरे भुवि शैत्यं कूपमाप तरुणीकुचदुर्गम् ।
किंचिदन्यदिनसंधिमवाप्तुं छायया सह परं चरति स्म ॥ ३० ॥

तापयत्यतितरां तरणिर्यल्लोकबन्धुरिति नाम कथं स्यात् ।
तत्सखस्य शुचिता शुचिमासश्चतका भुवि विचुक्रुशुरित्थम् ॥ ३१ ॥

छायया सह दिवैव कराग्रैः शम्बराम्बरहरेम्बररले ।
ज्येष्ठपूर्वमभियायिनि नूनं कोपताम्रनयना नलिनीति ॥ ३२ ॥

भाविशेषणमवेत्य दुरन्तं पञ्चसायकहिताय पयांसि ।
कामिनीकुचतटेषु वसन्तो विन्यधत्त यदिमावतिशीतौ ॥ ३३ ॥

वारिनर्मपरियौवतवक्षोजातसङ्गमवशात्सरसीनाम् ।
शैत्यमाप परितप्तजडानां किं न यच्छति सुवृत्तसमाजः ॥ ३४ ॥

वैरिचन्द्रगुणपक्कणभीत्या चक्रवाकमिथुनं परिशुष्यत् ।
आतपत्रविलसद्दिवसेभ्यः पारितोषिकमदात्परिणाहम् ॥ ३५ ॥

सामवर्तिहरितं ससुतेति प्राप्य तां हृतवसुर्दिशयार्कः ।
दूरतः परिहरन्नथ पश्चात्तापतः प्रतिययौ धनदाशाम् ॥ ३६ ॥

तत्र तत्रभवतायतिनेत्रा राघवेन्द्रगुरुणा क्रियतेन्यैः ।
फुल्लतल्लजसरोजसरस्यां जानकीपरिवृढप्लवकेली ॥ ३७ ॥

पूर्णरोचिषि तुषारमधीचौ भानुमालिनि गतेम्बरमध्यम् ।
योयमारभत कर्म हि चातुर्मास्यनाम रचयन् हरिपूजां ॥ ३८ ॥

तद्व्रतैरनुदिनं क्रियमाणेष्वेकवासरकृतं विभवं यः ।
कश्चिदाह यदि हन्त निवृत्तिं ब्राह्मणः श्रुतिततिं स लभेत ॥ ३९ ॥

वारिदावलितिरोहितमित्रं मानसाभिमुखपाण्डुरपत्रम् ।
नृत्यदद्रितनयासुतपत्रं दीव्यति स्म दिनमङ्गजमित्रम् ॥ ४० ॥

प्रावृडिन्दुसहजां परिणेतुः शब्दमण्डलसमाश्रयशौरेः ।
कुङ्कुमाक्तमचिरादुपवीतं पाकशासनशरासमिषाभात् ॥ ४१ ॥

पीतपुष्करकलापपयोभ्यो निर्गतैरिव जलैर्जलदेभ्यः ।
पद्मरागमणिविद्रुमभङ्गैरिन्द्रगोपनिकरैः स्थगिता भूः ॥ ४२ ॥

इन्द्रनीलकुलनीलघनालीमध्यवृत्तिचपलेव चकाशे ।
प्रावृडब्जनयना चिकुराली यल्लकोल्लसितकुङ्कुमरेखा ॥ ४३ ॥

कुम्भसम्भवगुरोरुपदेशं प्राप्तकाम इव दक्षिणदेशम् ।
जृम्भमाणजलधौ जलपाने वारिवाहनिवहो विशति स्म ॥ ४४ ॥

पाकवैरिवनसिन्धुतरङ्गा कृष्टरूढतरुमूलकलापा ।
व्योम्नि विद्युदिव काञ्चनवल्ली काममभ्रभरिता निपतन्ती ॥ ४५ ॥

व्योम्नि सान्द्रतरवारिदवृन्दे विद्युतासु विततासु समन्तात् ।
फुल्लमीलितपयोरुहपङ्क्त्या पुष्पवत्समुदयावनुमेयौ ॥ ४६ ॥

निर्गतानि दिवि सूर्यविभिन्नग्रीष्मवासरमदावलकुम्भात् ।
मौक्तिकानि सह मस्तकमांसैः सेन्द्रगोपकरका अनुचक्रुः ॥ ४७ ॥

दुग्धवारिविपयस्यधिवर्षं शार्ङ्गिणि स्वपति शेषशरीरे ।
मीलनान्नयनयोस्तनुलक्ष्म्यौ मेघपूर्णगगने द्युमणीन्दू ॥ ४८ ॥

स्वामिनिक्षिप्तवसौ दिननाथे यत्पुराजनि दिनेष्वतिकार्श्यम् ।
तद्विमर्शमधिगम्य दिनानामद्य हृद्ययतवासरवृद्धिः ॥ ४९ ॥

स्वप्रियां जलजनीं परिभूय प्रोर्मयत्तुहिनहन्तृदिनेभ्यः ।
तादृशी दिनकरे दिनवृद्धिर्या निशाक्षयविधावपि दक्षा　　॥ ५० ॥

पूर्णिमाहनि सपूषणि मध्ये पुष्करं लसति पुष्करनेत्रम् ।
पूजयन्यतिवरैरिह चातुर्मास्यनामनियमं विदधाति　　॥ ५१ ॥

दुर्दिने हरिकटाक्षविहीने पङ्किले च समये समतीते ।
संप्रबुद्धहरिवीक्षणगोभूद्रासरोथ विशदीभवदाशः　　॥ ५२ ॥

मल्लिकाक्षनिवहेषु मनोज्ञेष्वम्बुजेषु मुदिरेषु शरेषु ।
तत्रतत्र विशदं महिमानं दर्शयन् विहरति स्म स कालः　　॥ ५३ ॥

दिग्जयोन्मुखनृपव्रजकीर्त्या गर्भिणीकृतशरद्दिनलक्ष्म्याः ।
व्यक्तकीरततिरोमलतायाः पाण्डिमाजनि पयोधरदृश्यः　　॥ ५४ ॥

वीक्ष्य संयमिवरस्य पयोदा दानकेलिमतुलां धनलक्ष्याः ।
हन्त वर्षविमुखाः समभूवन् पाण्डुरा भृशकृशाश्च शुचैव　　॥ ५५ ॥

आत्मनोभिमुखमागतमेनं वीक्ष्य संयमिवरं धनदाशाम् ।
हर्षितो नु विचचार तदग्रे हंसपालिरिव वारिदपुञ्जः　　॥ ५६ ॥

वारिदागमयुगान्तविरामे नैकरूपसरसीमिषशौरेः ।
नाभिपद्मनिवहा इव पद्मा व्यञ्जयन्त्यलिविधिं विलसन्तः　　॥ ५७ ॥

उत्थितस्य सरसीरुहनाभेश्चन्द्रसूर्यनयनस्य तदानीम् ।
शंसतः स्म नलिनीरजनीशौ संप्रबोधमधिकं विलसन्तौ　　॥ ५८ ॥

प्रावृडागमयुगान्तसमुद्यद्वारिवाहजलधौ विनिवृत्ते ।
सैकतोत्कर इव क्षणदायाश्चन्द्रिका बुधजनैरुदलेखि　　॥ ५९ ॥

काम्यकर्मचयभञ्जनहेतूभूतदर्शनमिमं यमिधुर्यम् ।
वीक्ष्य बिभ्यदिव तत्फलभूतं शालिवृन्दमभवद्व्ययनम्रम् ॥ ६० ॥

प्रावृडाहितजलाक्रमभङ्गां सस्यमञ्जरिविभूषितगात्रीम् ।
मातरं क्षितिमवेक्ष्य वनाली पक्कदाडिम फलेन जहास ॥ ६१ ॥

मातुलंगलतिकामिह चूते स्प्रष्टुमुद्यतिफलस्तनमध्ये ।
मोहिते च मरुता वनराजिः पक्कदाडिमफलेन जहास ॥ ६२ ॥

भानुमालिनि गतेथ तुलायां रामनाथपुरमेत्य चिराय ।
सह्यभूधरसुतासलिलेस्मिन्मज्जनेन मुदितोभवदेषः ॥ ६३ ॥

मानिनीजनविमोहनचूर्णैः सारसेषु नृपसैन्यरजोभिः ।
व्योममण्डपकमौक्तिकगुच्छैराविरास समयो हिमपूरैः ॥ ६४ ॥

पद्मिनीमनवलोक्य पतङ्गो मन्ददीधितिरिहास हिमौघैः ।
रव्यदर्शनवशादिव शोकादब्जिनी च तुहिनैः किमु लीना ॥ ६५ ॥

उष्णरश्मिरधिकं हिमभीतो हव्यवाहदिशमिच्छति गन्तुम् ।
अग्निरस्त्युत न वेति विवेक्तुं प्रागयादिव समीरणचारः ॥ ६६ ॥

पाण्डुरङ्गपुरविठ्ठलमीक्ष्य प्रस्थितः स करवीरपुराख्यम् ।
पत्तनं विरचयन्हरिपूजां तत्र वासमकरोच्चिरकालम् ॥ ६७ ॥

गौतमाघपरिहारिणि तोये स्नानकर्म विरचय्य स विद्वान् ।
पूजितः प्रतिपदं प्रतिधीरैः प्राविशत्किल पुरीं विजयाख्याम् ॥ ६८ ॥

मुद्रयारिदरयोर्मिलिताग्न्योरङ्कितानकृत शिष्यसमूहान् ।
वादिनोपि परिभूय विशिष्य श्वेतमातपनिवारणमाप्नोत् ॥ ६९ ॥

स्नातवानथ बुधैः सह कृष्णानिम्नगापयसि निर्जितमारः ।
तत्तटे जयगुरूदितटीकां व्याकृतापि यतिराडणुभाष्यं ॥ ७० ॥

तत्रतत्र विरचय्य स वासं पुण्यभूषु पुरुषोत्तमभक्तः ।
श्रीमहीधरमुपेत्य च तुङ्गं वेङ्कटेशमवलोकितुमागात् ॥ ७१ ॥

नत्वा देवं वेङ्कटेशं यतीन्द्रः कृत्वा वासं वासरान्कांश्चिदत्र ।
काञ्चीमागात्काञ्चनागाररम्यां नत्वा विष्णुं चानमत्पार्वतीशम् ॥ ७२ ॥

शोणाद्रिमासाद्य निषेव्य शम्भुं वृद्धाचलं प्राप्य विलोक्य रुद्रम् ।
श्रीमुष्णमभ्येत्य वराहरूपं विष्णुं प्रणम्यैष नुतिं व्यतानीत् ॥ ७३ ॥

कृत्वा दिग्विजयमुपागतस्य दूरे
कावेरीशिशिरजलावलोकमात्रात् ।
यत्सौख्यं समजनि तत्सुखं मुरारेः
प्रायः स्यादिति यदि का कथेतरेषाम् ॥ ७४ ॥

श्रीकुम्भघोणनगरीं प्रविशत्युदारां रामार्चयोरुतपसैव कृशे यतीन्द्रे ।
मन्ये कथं नु जनतामहितामयोध्यां रामेण तेन भरतेन कृतप्रवेशाम् ॥

प्रहृष्टेन चित्तेन मध्येप्रतोल्यां महाधीर्विलासेन तात्कालिकेन ।
भुजङ्गप्रयातेन भूदेववन्द्यो हनूमन्तमित्थं प्रणौति स्म देवम् ॥ ७६ ॥

वाद्यैश्चित्रैः शङ्खभेरीमृदङ्गैः फुल्लैः पुष्पैर्विविध-
मनुजैः कीर्यमाणैः समन्तात् ।
वीथ्यांवीथ्यां युवतिकरगारार्तिके राघवेन्द्रो
रामे पूर्वं प्रविशति मठं प्राविशत्संपदाढ्यम् ॥ ७७ ॥

श्रीमत्कश्यपवंशवार्धिशशिनः षड्दर्शनीवल्लभ-
श्रीलक्ष्मीनरसिंहवित्तविदुषः श्रीवेङ्कटाम्बामणौ ।
जातेनार्यदयासुधामयगिरा नारायणेनोदिते
काव्ये चारुणि राघवेन्द्रविजये सर्गो जयत्यष्टमः ॥ ७८ ॥

इति अष्टमस्सर्गः



## अथ नवमस्सर्गः

॥ श्रीगुरुभ्यो नमः हरिः ॐ ॥

मागधा मधुभिदङ्घ्रिपङ्कजे जागरूकमपि संयमीश्वरम् ।
बोधयन्ति वचनैर्बुधोत्तमं काव्यवर्णनविधौ कृतादरैः ॥ १ ॥

मङ्गलानि कुरु पद्मसोदरैः संयमीन्द्र जगदादृगञ्चलैः ।
पश्य दृश्यविभवं दिनागमं दिक्षुदिक्षु मुखरीकृतागमम् ॥ २ ॥

पाकशासनपुरे गुरूदितैर्हन्त वेदवचनैरपाकृते ।
अन्धकारदुरपह्नवगेहे शक्रदिङ्मुखमिदं प्रसीदति ॥ ३ ॥

शातमन्यवदिशा निजेश्वरे भानुमालिनि समागमोन्मुखे ।
पूर्वमेव वितनोति पाण्डिमक्षौमनिर्मलवितानमम्बरे ॥ ४ ॥

अन्धकारभरवारणव्रजे काल्यकेसरिविदीर्णमस्तके ।
शोणितौघ इव शक्रदिङ्मुखे शोणिमा लसति तारमौक्तिकैः ॥ ५ ॥

व्योमरामपरिभाविशार्वरव्याजपन्नगमयास्त्रसन्ततेः ।
भञ्जनाय पुरतोरुणानुजः प्रादुरस्त्युदयरागकैतवात् ॥ ६ ॥

व्योमदम्भमधुगोलसंचरध्वान्तसंघसरघा निराकृतिम् ।
आतनोति समयः पुरा दिशा शोणिमाग्निशिखया विदीप्तया ॥ ७ ॥

व्योमनामभृति कुम्भसंभवे वारिधिं पिबति शार्वराभिधम् ।
औषसारुणिमदम्भतः शनैः पद्मरागनिकरो विजृम्भत् ॥ ८ ॥

अम्बरस्य तिमिरालिनीलिकानीलितस्य हरिदिङ्मुखाञ्चले ।
काल्यरक्तिमनिभेन काञ्चनीरेखिकातिरुचिरा विराजते ॥ ९ ॥

काल्यमल्लवर एष शार्वरद्वेषिमल्लमभिहन्तमुद्यतः ।
क्षिप्तरक्तिमरजा विदर्शयत्यर्कबिम्बनिभमुष्टिमग्रतः ॥ १० ॥

उद्भिविक्षुहृदयो निशात्ययः प्राग्दिशं तदुपकण्ठमादधे ।
काल्यरागमयमादिभूषणं भानुबिम्बमणिरञ्जितान्तरम् ॥ ११ ॥

हन्त शक्रहरिता दिनागमे यावकारुणपदाभिताडनात् ।
छायया सह समागमासहात्पाटलोजनि पयोजनिशिता ॥ १२ ॥

प्रातरम्बुनि निमज्ज नीरधेरुत्थितो हरिदिशा निजालिके ।
अर्कमण्डलमिषेण वासरः शोणिमाक्षतललाम संदधे ॥ १३ ॥

अन्धकारयवनीमपाकृतामारचय्य दिवसेन्दिरा नटी ।
व्योमरङ्गमभजत्प्रभाञ्चितं कुर्वती खगरवेण शिञ्जितम् ॥ १४ ॥

अन्धकाररिपुभूमिभृद्गणं जेतुमुत्कमनसो विभावसोः ।
बन्दिनो नु बिरुदालिवाचकाः प्राग्विशन्ति मुखरा विहङ्गमाः ॥१५॥

विप्रयुक्तसखिहृन्मलिम्लुचे विद्रुते सति विधौ निशात्यये ।
पद्मिनी विगतसाध्वसा शनैः फुल्लमावहति पद्मलोचनम् ॥ १६ ॥

चक्रवाकमिथुनार्धरूपिणीं पूरयेति विहिता समस्यकाम् ।
मीलिताब्जनयना शुचिस्मिता पूरयत्यहह तां पयोजिनी ॥ १७ ॥

निद्रिते त्वयि पुरा द्विजाधिपे स्वैरमेव चरति स्म चन्द्रमाः ।
याति बोधमधुना द्विजाधिभूर्नाममात्रभृदुपैति साध्वसात् ॥ १८ ॥

चक्रवाकविरहाग्निधूम्यया शार्वरेण जगती निपीडिता ।
तन्निवृत्तिसुखिताधुना ततो मन्दमुच्छ्वसति मारुतच्छलात् ॥ १९ ॥

एवमादिमगधोक्तिमाधुरीवारिपूरकृतसेचनादिव ।
बोधमेत्य यतिराट् समुत्थितो द्वीपिचर्ममयतल्पतल्लजात् ॥ २० ॥

द्वादशस्तुतिपुराणसंततीः श्रोतुमाननसमूहमेकदा ।
स्वं दशाधिकनवाननोदिशद्विश्वमूर्तिरिव चक्षुरागतः ॥ २१ ॥

आनतो भवदनन्तमग्रतः संयमीन्दुरवलोक्य सज्जनात् ।
आदरेण सुजनैः समर्पिताः श्रेयसे सततमाशिषोग्रहीत् ॥ २२ ॥

स प्रणम्य तुलसीवनस्थितामिन्दिरां तदनु तत्पदाश्रितम् ।
वायुनन्दनमवन्दतादरादिन्दिरेशकरुणैकमन्दिरम् ॥ २३ ॥

सोधिरुह्य शिबिकां गजेन्द्रमुक्त्युक्तिसंस्तुतिकृतादरः शनैः ।
स्नातुमभ्युपगतस्तरङ्गिणीं दक्षिणापथनिलिम्पनिम्नगात् ॥ २४ ॥

तीरभूरुहसुमानि तज्जले संनिपत्य सुमनस्त्वमाप्नुवन् ।
जातिमात्र इति तद्गताभवद्व्याक्रियातदितरेष्वपि स्फुटम् ॥ २५ ॥

यां प्रवाललहरीं मनोहरामुद्वहत्यधिवसन्तमम्बुधौ ।
तीरचम्पकसुमोत्करा लसन्त्युत्सवाय कृतदीपिका इव ॥ २६ ॥

शोषकेण मरुता कथं नु या वर्धिता च कथमित्यविस्मयः ।
सा यदुल्लसदनन्तरूपिणी याति रङ्गपतिशेषतां सदा ॥ २७ ॥

सह्यभूधरसरस्सरोजिनीसारसश्रितमरन्दसंततिम् ।
या बिभर्ति परथा रमेत किं तत्र रङ्गपतिभृङ्गतल्लजः ॥ २८ ॥

तत्तटोपवनसीम्नि वाहनात्सोवरुह्य यमिधुर्यचन्द्रमाः ।
क्षालयन् करपदं समृज्जलैर्दन्तपङ्क्तिपरिशोधनं व्यधात् ॥ २९ ॥

कल्पिताचमनमत्र सादरं स्नानकर्म कुरुते स्म शाश्वतः ।
अष्टषड्द्विपडक्षैरर्हरेर्मानितैर्मनुवरैस्त्रिधा क्रमात् ॥ ३० ॥

जप्यसूक्तजपशुद्धवारिणा प्रोक्षयन्यतिवरः शिरो निजम् ।
स्नातवान्विहितमृद्विलेपनोऽनुच्च्छसंस्त्रिरघमर्षणं जपन् ॥ ३१ ॥

उच्चरन्प्रणवमुत्थितोसिचत् स्वात्मगं पुरुषसूक्ततो हरिम् ।
विष्णुपादसलिलं पिबन् सुरांस्तर्पितानकृत मन्त्रवारिभिः ॥ ३२ ॥

सालमल्लकमवस्त्रलोहिते वाससी तदनु संयमीश्वरः ।
ऊर्ध्वपुण्ड्रमतनिष्ट गोपिकाचन्दनेन सहपञ्चमुद्रिकम् ॥ ३३ ॥

अर्घ्यदानविधिमर्घ्यवैभवः संविधाय हृदि वेदमातरम् ।
सादरं तदनु तारकं ततो मन्त्ररत्नमपि मौनतोजपत् ॥ ३४ ॥

तत्तटोपवनमेत्य पावनीः सोशृणोद् द्विजमुखात्कथा हरेः ।
आदिदैशिकसमर्चितोपलव्यासमूर्तिपरिपूजनोत्सुकः ॥ ३५ ॥

अभ्यपिञ्चदथ पङ्कजेक्षणं वारिमध्यकृतदुग्धधारया ।
संन्यवेदयदयं मनोहरं मौद्गमन्नमुरुधाधिकं नवम् ॥ ३६ ॥

संप्रणम्य विजयीन्द्रयोगिनं तापसोपमबुधव्रजावृतः ।
सोधिरुह्य मणिरम्यपादुके दैशिको मठमथ प्रतस्थिवान् ॥ ३७ ॥

शङ्खदुन्दुभिमृदङ्गकाहलीमड्डुडिण्डिमसुशृङ्गजर्झरैः ।
चक्रवाद्यनिनदैश्च तज्जनाः पूरयन्ति पुरतोस्य दिङ्मुखम् ॥ ३८ ॥

पावयन्नथ महीं पदेपदे पार्वतीशमभिवन्द्य पद्धतौ ।
प्राविशत्ससुर विष्टपागमो मूर्तिमानिव मठं तथागमः ॥ ३९ ॥

शान्तिवाचनपुरस्सरं वरं भाष्यमेव स विशिष्य संसदि ।
व्याकरोति विदुषां निराकरोत्यन्यदर्शनकुयुक्तिसंहतिम् ॥ ४० ॥

ब्रह्म सद्गुणमदोषमीक्षितं गम्यमाहुरिव लक्षणैः क्रमात् ।
सूत्रभाष्य इति तेन भाषिते तत्र कश्चन सुधीरचोदयत् ॥ ४१ ॥

नित्यवाग विषयस्य सर्वथारम्भणं न विषयस्य युज्यते ।
नामधेयमिह यज्जडं मृषा जातमर्थरहितं स्वचिन्तनन् ॥ ४२ ॥

नात्मतत्त्वमपि तत्र नापरश्चेष्टितादिबहुलिङ्गसिद्धितः ।
जीवभिन्नपरमोप्यमानको न स्वयं च यदहंधिया यतः ॥ ४३ ॥

किंच किं फलममुष्य वेदने कर्मणैव भवति स्वरादिकम् ।
नापि मुक्तिरधुनैव तद्विदां दृश्यते न यदसावपि क्वचित् ॥ ४४ ॥

अत्र कश्चिदमुमभ्यचोदयच्छुद्धमस्य विषयं स्वमानसम् ।
शुद्धवेदनफलं वदेन्न चेद्बन्धभङ्ग इति किं ततो वद ॥ ४५ ॥

इत्युदीरितगिरातिरोषितस्यद्वचः प्रतिवचोन्य आददे ।
यत्तु शुद्धमुदितं न मानसं तन्नयुक्तमिति हन्त चिन्त्यते ॥ ४६ ॥

यन्न भाति जडजीवभेदनं कर्तृतादिविरहोऽद्वितीयता ।
एकतापि तदसारमात्मनोऽभिन्नमैतदिति चेदसंशयः ॥ ४७ ॥

अन्यदेतदिति नापि युक्तिमत्संमृषेति हि विकल्पनाक्षमम् ।
तत्स्वरूपमिति चेन्न भासते तत्र नैव तव युज्यते श्रमः ॥ ४८ ॥

अत्र तद्भ्रमनिरासनोत्सुकः सस्मितं सदयमब्रवीद्गुरुः ।
अस्ति किंचिदहमर्थतः परं विष्णुनाम गुणपूर्णम तम् ॥ ४९ ॥

यद्विचारविषये निगद्यते ब्रह्मनाम परजीवभेदकम् ।
मुक्तिरेव फलमस्य वेदनात्प्रक्रमोस्य विषयादिमांस्ततः ॥ ५० ॥

एवमादिपरमात्मचिन्तनैरास्त संयमिवरोतिहर्षितः ।
तत्र सोनुभवलिप्सया दिवो मध्यसीमनि रविर्व्यलम्बत ॥ ५१ ॥

अस्ते ध्वान्ते समस्ते प्रतिभटसरणीं गत्वरे प्रादुरासी-
च्छायारूपं तदेतच्छरणमुपगतं पादमूलं जनानाम् ।
हन्तामन्दप्रतापै रपि मम किरणैः शक्यते तन्न भेत्तुं
धिङ्मामित्याकुलोर्कः प्रतपति कलयन्व्योममध्ये विलम्बम् ॥ ५२ ॥

वक्राम्भोजं विधत्ते मम सुहृदमिति प्राप्तरोषो विवस्वान्
म्लानं मीनेक्षणानां नयनयुगमयं कल्पयन्नुल्बणश्रीः ।
तच्छायाधारिणोस्मानपि तपति मुहुस्तं समाधेहि पाही-
त्याराद्म्भोजिनीनां शकुलकुलमयादाकुलं पादमूलम् ॥ ५३ ॥

माध्यन्दिनस्नानकृते महान्तं मुनीन्द्रमित्थं किल कालशंसी ।
आगत्य मध्यन्दिनस्नानमस्मै न्यवेदयत्प्राप्तमदप्तचेताः ॥ ५४ ॥

व्याख्याय शिष्यनिवहाय चिराय सोय-
माम्नायमौलिवचनानि मनोहराणि ।
माध्याह्निकानि विविधानि विधातुकामः
कर्माणि मन्दमुदतिष्ठदुदग्रकीर्तिः ॥ ५५ ॥

निष्कुटविलसत्पुष्करवत्यां पुष्कलकीर्तिर्मस्करिधुर्यः ।
साधु निमज्ज्य सुधीजनमान्यो माधवमङ्गलगेहमयासीत् ॥ ५६ ॥

डम्भासोढा काममम्भोरुहाद्यैरम्भःपूर्णं कुम्भमादौ समर्च्य ।
आब्रह्मान्तर्मातृकादीनशेषान् देवान् देवैः पीठगैः पार्श्वगैश्च ॥५७॥

शालिग्रामानम्बुजाक्षस्य मूर्तिं मन्त्राम्भोभिः संयमीन्द्रोभिषिच्य ।
नव्यैः पुष्पैरातनिष्टातिरम्यै रत्नैरर्घ्यैं रामचन्द्रस्य पूजाम्　॥ ५८ ॥

वाजिमेधयजिना विकल्पितं शङ्खवारि शिरसा स धारयन् ।
राजसूययजिनापि सम्मतं विष्णुपादसलिलं पिबत्यसौ　॥ ५९ ॥

स्वत कवेरजापयोनघं हि किं पुनर्हरेः ।
पदं समाश्रितं चतुःपुमर्थदं भवेदिति　॥ ६० ॥

पश्चात्कृत्वा हरिपदनतिं संयमीन्द्रोथ भुक्त्वा
पुण्यं भैक्ष्यं तदनुरचयन् तर्कशब्दादिशास्त्रैः ।
विद्वद्भूपैर्विविधनगरात्प्राप्तवद्भिर्विनोदं
ध्यायन्विष्णुं समयमनयत्सोयमासायमेवम्　॥ ६१ ॥

श्रीमत्कश्यपवंशवार्धिशशिनः षड्दर्शनीवल्लभ
श्रीलक्ष्मीनरसिंहवित्तविदुषः श्रीवेङ्कटाम्बामणौ ।
जातेनार्यदयासुधमयगिरा नारायणेनोदिते
काव्ये चारुणि राघवेन्द्रविजये सर्गोभवन्नावमः　॥ ६२ ॥

इति नवमस्सर्गः



# अथ दशमस्सर्गः

॥ श्रीगुरुभ्यो नमः ॥ श्रीराघवेन्द्रगुरुभ्यो नमः ॥ हरिः ॐ

उत्तरामुखतया वलमाने सायमर्यमरथेऽभिसुमेरु ।
तन्मुखोल्लसितसारथिभासा पाटला स्फुरति पाशभृदाशा ॥ १ ॥

सायमन्तिकचरन्मुनिपालीगीतसामनिनदेन शताङ्गे ।
विद्रुतारुणमणीजलसेकाल्लोहितायति सरोरुहबन्धुः ॥ २ ॥

निर्धुताखिलतमा निजजन्मारभ्य विष्णुपदसेवनशीलः ।
स्वस्वरूपमगमत्परमाविर्भूतमेव मिहिरोरुणभावम् ॥ ३ ॥

रागिणं स्वमवलोक्य निकामं रागिणां च विषमां गतिमीक्ष्य ।
वस्तुमापदपरागसमीपं मन्दमन्दमरविन्दकुटुम्बी ॥ ४ ॥

विप्लवं व्रजति कान्तिकलत्रे पद्मिनीमपरवारिधिजाताम् ।
उद्विविक्षुहृदयो हरिदश्वो याचितुं तमगमत्तटिनीशम् ॥ ५ ॥

सान्ध्यरागमयपावकदीप्तं लोकमीक्ष्य शकुनाभयमूढाः ।
प्राद्रवन् झडिति शावकवर्गं वीक्षितुं विहितभूरिनिनादाः ॥ ६ ॥

पद्मिनी परिचिता सततं नः साबतात्मपतिना वियुतेति ।
सद्य एव वियुतानि बभूवुश्चक्रवाकपततां मिथुनानि ॥ ७ ॥

एकचक्रमवलम्ब्य शताङ्गं बाधते विरहिणो मिहिरोसौ ।
इत्यवेत्य मदनः स्वयमाधादेकचक्रमयमाशु शताङ्गम् ॥ ८ ॥

अम्बराभिधहरिन्मणिपात्रे शङ्कविष्णुपदवारि दधानम् ।
हेमभाजनयुगं शशिभान्वोर्मण्डलद्वयमिदं कलयामः ॥ ९ ॥

पूर्वभूमिधरगाधिसुतेन प्रेरितं रविमयाब्जभवास्त्रम् ।
तद्गसत्यपरशैलवशिष्टे कोपवह्निरिव सान्ध्यमरीचिः ॥ १० ॥

अम्बुजेष्वरयुतेषु वियोक्तुं सायशाणकषणेन सुतीक्ष्णम् ।
किं चकार निजकञ्जकलम्बं तादृगेव यदभून्मुकुलं तत् ॥ ११ ॥

वीक्ष्य पद्मविपिनेषु पुरा यत्केसरिश्रियमदुद्रवदारात् ।
तां विलोक्य शिथिलां पुनरागात्तत्तथैव तिमिरद्विपवृन्दम् ॥ १२ ॥

अर्चयन्मधुकरच्छलशालिग्राममेष समयाभिधयोगी ।
सायमम्बुजसमुद्गममध्ये सन्निधाय विदधेऽस्य च मुद्राम् ॥ १३ ॥

पद्मिनी पतिशुचा भ्रमरालीकङ्कणे निरसितुं कृतचेताः ।
अब्जपाणिमनिलेन विलोलं हन्त हन्त समकोचयदाशु ॥ १४ ॥

रश्मिजालमधिकं भुवनाब्धेः कालधीवरवरः परिकृष्य ।
पङ्कशैवललुठज्झषसंघं ध्वान्ततारनिभतो गगनेऽधात् ॥ १५ ॥

चन्द्रदीधितिनटीं दिवसान्तः सादरं नटयितुं भुवनान्तः ।
संविकीर्य किमु तारसुमौघं ध्वान्तनीलयवनीं पुरतोऽधात् ॥ १६ ॥

वर्षके सति तमिस्रजलौघं व्योमनामनि घनाघनसंघे ।
दीपिकास्तत इतो वलमानाः शक्रगोपनिकरा इव रेजुः ॥ १७ ॥

दग्धतामुपगतेषु मनोभूर्वह्निनायुगपदेषु निकामम् ।
भञ्जिते सति हि शार्वरधूमे रेजुरग्निकणिका इव दीपाः ॥ १८ ॥

भानुकार्तयुगधर्मविलोपाज्जृम्भिते जगति शार्वरपापे ।
अस्फुरंस्तत इतः किल दीपा रक्षिता इव तपोङ्कुररेखाः ॥ १९ ॥

कालनामनिजनाटकमध्ये दीपिकावलिनिभेन विधात्रा ।
उद्यदिन्दुमयदीपवरस्य प्रागतानि किमु सूचनभङ्गी ॥ २० ॥

चन्द्रिकापि यदि संघटिताशा ध्वान्तदीपततिसंगतिकाले ।
किं त्रिवेणिकथयास्ति कवीनां स्वल्पतोपि जहतां पुनरुक्तिम् ॥ २१ ॥

व्योमगुग्गुलुतरोर्धवला निर्यासपङ्क्तिरिव तारकराजिः ।
शार्वरेभकषणा लुलिताः किं तत्कणा भुवि तमोमणिदम्भात् ॥२२॥

शर्वरीशशरदा परिमृष्टः शार्वरव्रजघनाघनसंघः ।
दृश्यते स्म शनकैर्धवलश्रीश्चन्द्रिकालहरिकामपदिश्य ॥ २३ ॥

कालकालवदनेन तमिस्रैः स्मश्रुलेन शरदेन च तारैः ।
अम्बरेण वियुजां ग्रसनार्थं सान्ध्यरागरसना प्रसृता नु ॥ २४ ॥

विप्रयुक्तसुदृशां विनयार्थं ध्वान्तकल्पजलधावभिवृद्धे ।
बिम्बनश्रियमवापुरुडूनां ज्योतिरिङ्गणगणस्फुरणानि ॥ २५ ॥

मारकारुकृताधितमिस्रं गोलमब्धिनलिनीविरहाग्नेः ।
ऊर्मिभस्त्रपवनैरतितप्तं शीतरश्म्युदयरागमिषेण ॥ २६ ॥

निर्यतो भुवि निलिम्पतटिन्याः कौमुदीमिषपयःप्रकरस्य ।
मौक्तिकभ्रम इव प्रचकाशे पूर्वशैलशिखरे शशिबिम्बम् ॥ २७ ॥

पूर्वसिन्धुसलिलेन निषेक्तुं तारकाङ्कुरततिं ततरश्मि ।
इन्दुबिम्बपिटकं किमु दध्रे दक्षिणोत्तरहरित्परिणीभ्याम् ॥ २८ ॥

उत्क्षिपत्युदयरक्तिममौलिप्रावृतिं हरिदिशा हरिणाक्षी ।
मन्दमिन्दुवदनं किमुदञ्चत्याहृता नटितुमम्बररङ्गे ॥ २९ ॥

पान्थसंहृतिकृते कृतचेता यष्टमादितहविर्नवनीतम् ।
द्रौतमेष विपमेपुरुदन्वन्मौलि ोलविधुबिम्बनिभेन ॥ ३० ॥

चक्रवाकमिथुनच्छलनीरक्षीरयोरकृत हन्त विभागम् ।
व्योमनामसरसीकृतकेलिः सायमेषसितरश्मिमरालः ॥ ३१ ॥

पूर्वभूमिधरवेदिगतोद्यद्रागवह्न्युपरिरश्मिघृताक्ताम् ।
संपचन् विधुवपां समयोऽधाद्योजिताम्बरवपाश्रपणीकाम् ॥ ३२ ॥

अन्धकारनिभकल्पविरामे विप्लुतं जगदिदं विधुवेधाः ।
किं ससर्ज तदिदं यदमुष्मिन्नुद्यते सति परं विललास ॥ ३३ ॥

संयमीन्द्रविविधोक्तिविलासं श्रोतुमुत्सुकमना दिवसान्ते ।
उन्ममज्ज जलधेर्विधुदम्भाद्दर्शयन् फणगणान् फणिराजः ॥ ३४ ॥

रक्तयोरभिमुखं स्थितिभाजोः पद्मिनीकुमुदिनीपरिणेत्रोः ।
कः करोतु बत बिम्बविवेकं नापरत्र यदि लक्ष्मविलासः ॥ ३५ ॥

पूर्वशैलवृषभाचलदृश्यं देवतीर्थमधिगम्य सुधांशुम् ।
हृष्यतोस्य भुवनस्य न मोघं चन्द्रिकात्मसुकृतत्वमयासीत् ॥ ३६ ॥

विष्टपे विधुरुचा विदधाने क्षीरसागरनिमज्जनकेलिम् ।
पाठकर्म स समाप्य सरस्यां मङ्क्तुमन्त उदयुङ्क्त यतीन्द्रः ॥ ३७ ॥

स्नानकर्म विरचय्य वसानो वाससी त्रिपदया सवितारम् ।
वन्दते स्म तदनु त्रिदशेशं विष्णुमैहत समर्हितुमर्हम् ॥ ३८ ॥

अर्पयन्भगवते सुममाल्यं प्रीणयन् सपयसा च फलेन ।
हेमपात्रविलसद्घनसारारार्तिकेण कलयंस्तमहृष्यन् ॥ ३९ ॥

मन्त्रपुष्पमधिमौलि दधानो यन्त्रितान्यविषयो रघुनेतुः ।
सादरं दरनिमीलतनेत्रः स्तोतुमारभत संयमिधुर्यः ॥ ४० ॥

वेदसिद्धमणुतोप्यणुभावं मोददायि महतोपि महस्त्वम् ।
बिभ्रतं प्रथयितुं मनवे त्वां मीनतां शरणयामि भवन्तम् ॥ ४१ ॥

वेदविप्लुतिकृतिं विधिजाड्यं हन्त हन्तुमदधाज्जलजन्म ।
मीनभावनभरेण ततो मे विस्तृणीहि विमलं प्रतिबोधम् ॥ ४२ ॥

आत्मनैव कमठेन वितन्वन्मन्दरेण च भवानरणी द्वे ।
मथ्नतोत्थितहलाहलवह्निं होतुमिन्द्ररिपुवृन्दहवींषि ॥ ४३ ॥

आदिसूकरधरोद्धरणं ते सिन्धुबन्धुजठरात् श्रुतिगीतम् ।
मादृशां भवपयोधिगतानां रक्षणे परिचयं तदवैमः ॥ ४४ ॥

पूर्णचन्द्रगतलक्षणरेखा लक्षिता यदि तदैककलायाम् ।
संश्रितेन्दुमणिदंष्ट्रधरं स्यात्सोपमा भवति सूकररूप ॥ ४५ ॥

तावकं नरहरेऽतिविरुद्धं वेषधारणमिदं तनुते नः ।
अत्यसंघटितकर्म च कृत्वा पालये प्रणतमित्युपदेशम् ॥ ४६ ॥

दारितोदरहिरण्यकशत्रोरान्त्रमाल्यकलितं तव रूपम् ।
नारसिंह कलयेऽननुभूतं शारदं जलधरं सहशम्पम् ॥ ४७ ॥

जानतां निजमनः परमाणौ मातुमेव बलिनिग्रहदम्भात् ।
वामनं यदभवत्तव रूपं तत्सुखेन भगवन्हृदि कुर्मः ॥ ४८ ॥

चन्द्रमा इव भुवो रचयन्नक्षत्रयोगमपि यस्त्वमलासीः ।
तेन शात्रवयशोम्बुजराजीमुद्रणं तव कृतिं बहु मन्ये ॥ ४९ ॥

तारणे दुरितनीरनिधेर्नः सेतुभावमचिरेण यियासोः ।
भासते तव विभो करुणायाः पूर्वरङ्ग इव दक्षिणसेतुः ॥ ५० ॥

बन्धनाय कृतमात्मजनन्या तादृशं च गुणमङ्ग्यकरोर्यत् ।
तेन निर्गुणमतानि निरस्यन्दर्शयस्यपि निजां गुणवत्ताम् ॥ ५१ ॥

सर्वदेवरथचेष्टनमङ्गीकुर्वतस्तव सदैव जगत्याम् ।
अर्जुनैकरथसारथिभावो विस्मयाय विदुषां न कथंचित् ॥ ५२ ॥

त्वं कुचेलमुनिमीश कुचेलाद्यर्पणेन कृतवानकुचेलम् ।
सोभवत्तदपि चारुकुचेलालंकृतस्तदिदमद्भुतमासीत् ॥ ५३ ॥

एवमादिविविधैरवतारैः पालिताखिलजनौघ ममाघम् ।
सन्निरस्य कमलास्य नमस्यां स्वीकुरुष्व रघुवंशवतंस ॥ ५४ ॥

इत्युदीर्य विनतोपि नयेन प्रार्थितस्तदनु संसदमागात् ।
सत्पथं विशदयन् समुदीतः पूर्वशैलमिव कैरवबन्धुः ॥ ५५ ॥

प्रांशुयन्मणिगवाक्षविनिर्यद्द्योसरिज्जलवशात्समुपेत्य ।
अक्षमा इव लुठन्ति यतीन्दुच्छत्रचामरमिषेण मरालाः ॥ ५६ ॥

व्योमलङ्घनमदेन समुद्यन् यन्निरुद्धगतयो दिवि ताराः ।
तत्प्रभुं शरणयन्ति यतीन्दुं मौक्तिकासनगमौक्तिकदम्भात् ॥ ५७ ॥

नाद्भुतं श्रितवतां सततं यस्तम्भदुर्गुणलयो भवितेति ।
संनियच्छति निगृह्य समस्तं स्तम्भमप्यतिमहान्तमसौ यत् ॥ ५८ ॥

संचरन् क्वचन यत्र दिदृक्षुश्चन्द्रकान्तमणिमण्टपतोधः ।
आदृतः शशिरुचा बत सिद्धः पर्यहास्यत परत्रगतेन ॥ ५९ ॥

संचरन् शिखिमुखोरगपीतस्वाश्रयानिललयात्सवनेषु ।
सम्पतत्सु पतितो भुवि सिद्धा विस्मयं दधति हन्त यदन्तः ॥ ६० ॥

न त्यजन्ति मिहिरं तव यात्राङ्गारचर्वणचणा हि चकोराः ।
पक्षिभाषणकृते यदि नामावालिखिल्यनिगमाध्ययनानि ॥ ६१ ॥

तत्र चन्द्रमणिकुट्टिमसिन्धौ मौक्तिकासनमये भुजगेन्द्रे ।
राजते रघुपुरन्दरनामा पाटलाम्बरधरः परमात्मा ॥ ६२ ॥

केचन प्रतिपुरंदरमेनं पर्युपासत बुधाः प्रतिमान्तैः ।
कुर्वतेत्र पदपूर्वसमस्यापूरणं च कवयः पुरतोस्य ॥ ६३ ॥

श्रियः पतिः श्रीमति शासितुं जग-
न्निपीय यस्य क्षितिरक्षिणः कलाः ।
श्रियः कुरूणामधिपस्य पालनीः
श्रियः स दत्तांत्विह ते पुरःस्थितः ॥ ६४ ॥

सन्तं श्रीरमणं प्रियं यतिवरं व्यासस्य भावे भृशं
दुर्वारामितमायिभिक्षुतिमिरे पर्वस्थचन्द्रं भुवि ।
सत्संघस्तुतमिष्टदक्षितिरुहं वन्दारुविप्राश्रयं
तं नत्वा सकलो दुरूहसुदृशं संयाति विद्यादिकम् ॥ ६५ ॥

श्रीमत्कश्यपवंशवार्धिशशिनः षड्दर्शनीवल्लभ
श्रीलक्ष्मीनरसिंहवित्तविदुषः श्रीवेङ्कटाम्बामणौ ।
जातेनार्यदयासुधमयगिरा नारायणेनोदिते
काव्ये चारुणि राघवेन्द्रविजये सर्गोन्तिमोभूदिह ॥ ६६ ॥

॥ श्रीः ॥

इति दशमस्सर्गः

इति श्रीमद्विद्वत्कुलावतंस महाकवि श्रीमन्नारायणार्य विरचित
श्रीमद्राघवेन्द्रविजयः समाप्तिमगमत्

॥ समाप्तोऽयं ग्रन्थः ॥

श्रीमदस्मद्गुर्वन्तर्गतश्रीमद्राघवेन्द्रगुर्वन्तर्गतश्रीमद्भारतीरमणश्रीहनूमद्भीममध्वा-
त्मकमुख्यप्राणान्तर्गतः श्रीमूलरामचन्द्रः प्रीयताम् ॥

॥ श्रीकृष्णार्पणमस्तु ॥



॥ श्रीः ॥

# शुद्धाशुद्ध पत्रिका

| पत्रं | पंक्तिः | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| १ | २० | वाणी पाणि | वाणीपाणि |
| २ | ५ | महोजुषे | महोमुषे |
| ,, | ६ | यशोमुषे | यशोजुषे |
| ४ | १४ | नित्यापि | नित्यानि |
| ५ | ७ | शिला- | शिला |
| ,, | ८ | रुद्धीः | रुद्धिः |
| ७ | २ | वाच | वाचा |
| ९ | १ | खेलद्विप | खेलद्द्विप |
| ,, | ८ | परता | परथा |
| १० | ७ | द्विरैरुपेतं | द्वारैरुपेतं |
| ११ | ६ | लाल्यमानः | लाल्यमान |
| १३ | १ | वर्ण | वर्ण्य |
| ,, | ७ | द्दयिता | द्दहिता |
| ,, | १४ | परथापत्य | परथाऽपत्य |
| १४ | १ | सुतोऽसहायः | सुतोसहायः |
| ,, | ८ | चक्रं | चित्रं |
| १५ | ९ | देप्यतोऽस्य वमने- | देप्यतस्याद्वमने |
| १५ | २० | वदावदावलीनां | वदावदावलानां |
| १६ | १ | लक्केन | लक्कैर्न |
| ,, | १३ | सहसाऽप्राप्त | सहसाऽपास्त |
| १७ | ३ | विराजितातननाब्जं | विराजिताननाब्जं |
| ,, | १३ | मानसन् | मानसम् |
| १९ | ९ | वृद्धि | बुद्धि |
| ,, | १३ | ऋवत् | ऋवम् |
| ,, | १६ | जामनः | जन्मनः |
| २० | ३ | सुरोनध्ययने | सुरोऽनध्ययने |
| ,, | ४ | गुरुणान्य | गुरुणाऽन्य |
| २१ | ७ | बिंबाम्रलसत् | बिंबाम्रगलत् |
| ,, | १२ | वचोऽधिदेव्यां | वचोधिदेव्याः |
| २२ | १० | नैजसात्मनो | तैजसात्मनो |
| ,, | १६ | करैर्व्यधात् | करौव्यधात् |

| पत्रं | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २३ | ३ | मसृजत | मसृजन् |
| ,, | ६ | समेनराम्ते | समेतराम्ते |
| ३० | ११ | पृथ्वीदेशा | पृथ्वीदेवा |
| ३१ | २ | किंचतोऽ | किंचातोऽ |
| ३२ | १५ | स्वन्पः | स्वप्नः |
| ३३ | ९ | ॐकारञ्ज | ॐकाराञ्ज |
| ,, | १६ | मर्त्यैरतै | मर्त्यैरासै |
| ,, | १८ | चशक्यं | नशक्यं |
| ३४ | ३ | श्रीशानना | श्रीशानानना |
| ,, | ९ | मध्वं | मध्वा |
| ३५ | ३ | मेकादशं | मेकादशं |
| ३७ | ८ | चामिदाम् | चाभिधाम |
| ३९ | १२ | स्वलेखिले | स्वलेऽखिले |
| ४० | ७ | कृतेः | कृते |
| ४५ | ६ | द्रुरुतेजाः | दुरुतेजाः |
| ,, | २० | कांङ्क्षी | काङ्क्षी |
| ४६ | १ | कलितर्धि | कलितार्धि |
| ४८ | ५ | श्वतका | श्वातका |
| ४९ | १३ | तखारिदवृन्दे | तरवारिदवृन्दे |
| ५० | १ | प्रोमे | प्रेम |
| ५४ | १५ | ध्वातसन्घ | ध्वान्तसन्घ |
| ,, | १८ | विजृंभत् | विजृंभते |
| ५५ | ६ | निशिता | नीशिता |
| ,, | १४ | फुक्क | फुल्ल |
| ५६ | ५ | सज्जनात् | सज्जनान् |
| ,, | १० | निम्नगात् | निम्नगाम् |
| ५७ | ४ | नुच्च्छसं | नुच्छ्वसं |
| ५८ | ८ | ग्रतः | मितः |
| ,, | १६ | मैतदिति | मेतदिति |
| ,, | २० | पूर्णमतम् | पूर्णमद्भुतम् |
| ५९ | २९ | डम्भासोढा | डम्भासेढः |
| ६३ | २ | भङ्गी | भङ्गः |
| ६५ | १० | मश्चतोत्थित | मश्चतोक्त |
| ६६ | १ | रचयन्नक्षत्र | विरचन्नक्षत्र |
| ६७ | ५ | पतितो | पतिता |
| ,, | ९ | प्रतिमान्तैः | निगमान्तैः |

Parimala Press Mysore.